पर्यवसानस्य पश्चविकरणादिन्यायसिद्धत्वात् । न्यायानपेक्षत्वे किं शारीरकशास्त्रेणापि । ध्यानोपासनशब्दयोश्च ज्ञानविशेषविषयतया ज्ञानसामान्यविषयवेदनादिशब्दानां तस्मिन् विशेषशब्दार्थ एव पर्यवसानं युक्तं, विकल्पसमुच्चयफलान्तरार्थाद्यसंभवस्योक्तत्वात्, तदुक्तम्— "अष्टदोषाद्विकल्पेस्तु गौरवं चव्यवस्थितौ । समुच्चयेऽनपेक्षास्या दङ्गाङ्गित्वं नमीयते ॥" इति । तथा विद्युपास्योर्व्यतिकरेणोपक्रमोपसंहारदर्शनाच्च तयोरैकार्थ्यं सिद्धम् । "मनोब्रह्मेत्युपासीत" इति विहितमेवह्युपासनं "भातिचतपतिचकीर्त्या यशसाब्रह्मवर्चसेन यएवंवेद" इतिफलविधानार्थमनूद्यते । नह्यफलंविधायान्यत्सफलमनुवदितुं युक्तम्, एवं "यस्तद्वेदयत्सवेद" इति वेदनशब्दमात्रश्रवणाज्जानश्रुतिः तदर्थं "यांदेवतामुपास्से" इत्युपासिनानुवदति । एवमन्यत्रापि । तथा "तमेवंविद्वानमृतइहभवति । नान्यःपन्थाअयनायविद्यते" "नाहंवेदैर्नतपसा" इत्यादिश्रुतिस्मृत्योर्वेदनभक्तिशब्दाभ्यां मोक्षोपायमभिधाय तदपरोपायनिषेधपरयोः परस्परार्थप्रतिक्षेपानुपपत्तेः वेदनशब्देनापि तत्र धारावदविच्छिन्नभक्तिरूपज्ञानविशेषएव विवक्षितइति स्वीकर्तव्यम् । एवं ध्यानोपासनभक्तिशब्दसमानार्थतया वेदनादिशब्दानां विशेषविषयत्वे निश्चितेसति सामान्यमात्राश्रयणं न्यायानभिज्ञतानिबन्धनम् । तदुक्तं "परोक्षागमनिर्णीतो निपुणन्यायपूर्वकं । गर्दभादितुल्यत्वं गर्दभप्रायकल्पितम् ॥" इति । यःपुनर्वाक्यतःसिद्धस्यैव ज्ञानस्य विधेयत्वं न संभवतीति तदस्माकमिष्टमेव, ततोऽन्यस्यैव विधानोपपादनात् । प्रपञ्चनिवृत्त्यपरिशेषणार्थमोक्षवादः, वाक्यार्थज्ञानमात्रेणाविद्यानिवृत्त्यदर्शनात्, आहुश्च "रागद्वेषादियुक्तस्य शास्त्रश्रवणेपिहि । दृश्यतेऽन महं पूर्वो विवादोऽन्यवादिनां ॥" इति । ननु येषां वाक्यार्थज्ञानं जातं येषां अविद्यानिवृत्तिरस्त्येव, येषामनुत्पन्नास्ति तेषां तदपि नजातमित्यवसीयत इति चेत् तन्न, गुरुशिष्याणां साधनानुष्ठानसंभवात्, तदसंभवेन शिष्याणां ब्रह्मादेर्ध्यानविसंवादात् ।

परमाचार्यस्यापि । अथवाक्यार्थज्ञानेन निवृत्ताविद्याणामविद्यावत्ता आवश्यकाइतिचेन्न, नेत्र आपन्नत्वादिव्यापारस्य तच्चरणशरीरे स्थित्यादेस्तत्प्रयोजनस्य च प्रमाणिगमपूजापरानुग्रहादेः स्वतन्त्रप्रतिभान्यथानुपपत्त्यन्तरेणासम्भवात् । अविद्यानिवृत्तावपि बाधितानुवृत्त्या भेदप्रतिभासात् प्रत्यक्षादिविरोधः प्रवचनाद्युपपत्तिश्चेतिचेत् तन्न, भवत्पक्षे बाधितानुवृत्त्यसम्भवस्य वक्ष्यमाणत्वात् । तत्राप्यविशदप्रतिपत्तिमात्रादविद्याविशेषवशाद्वा प्रवचनाद्युपपत्तिरितिचेन्न, विशदप्रतीतिपरामर्शरूपप्रत्यक्षसिद्धान्तयोर्विरोधात् । विशदाभ्यक्षिणमस्माकमाचार्याश्च वासुदेवादयोऽर्जुनादिभ्य उपदिशन्तीतिहि स्वीकृतमस्माभिः । नचाद्वैतसिद्धान्तप्रवर्तका स्वात्मना तदनभिज्ञतामनुमन्यन्ते । तत्राप्यविवादश्च । किञ्च प्रतिवादिनं प्रत्यभिचार्य कथं भवत्पक्षं प्रतिक्षिपसि । नतावदविदित्वैव, निराश्रयवादायोगात् । विदित्वाचेत् कथं तर्हि प्रतिवादिनाविदिते भवत्पक्षे भवतां ज्ञानानुपपत्तिः । नहि स्वोक्तं परे जा

---

श्चित् ज्ञानविशेषत्वात् न निदिध्यासनसाध्यत्वमित्यर्थः । (परमाचार्यस्येति) श्रवणासिद्धिप्रसङ्ग इत्यर्थः । (भवत्पक्षइति) दोषप्रयोजकवशाद्वा बाध्यतुल्यमिथ्यावागीयवाददित्यर्थः । (अविद्याविशेषेति) विशदज्ञानात्काचिदविद्यानिवृत्ता काचिन्नेति भावः । (विशदेति) शुद्धगुरुश्रवणेनार्थो मेऽविशदइति प्रत्यक्षविरोधइत्यर्थः । सिद्धान्तविरोधं विवृणोति (विशदाभ्यक्षिणेति) अविद्याविशेषात् प्रवचनादिपक्षे दूषणमाह (नचेति) त्वमेवाज्ञानापादनेन गुरुभ्यो द्रुह्यसि तेन स्वाज्ञानं नानुमन्यन्तइत्युपालम्भः । अज्ञानानुमतौ दोषमाह (तत्राप्यविवादइति) अद्वैतस्याज्ञाने त्वया तदसाधनात्तावयोर्विवादस्स्यात् । नहि किञ्चिद्ज्ञाने पि कस्यचिदज्ञानस्य निवृत्त्या व्यवहारस्सम्भवः — पूर्वदिनेऽज्ञाननिवृत्तौ उत्तरदिनेऽज्ञानान्तरसत्त्वेऽपि व्यवहारप्रसङ्गात् कृत्स्नतमोनिवृत्तौ तमोऽन्तरसत्त्वेऽपि व्यवहारप्रसङ्गाच्चेतिभावः । येषामविद्यानिवृत्तिर्नास्ति तेषामज्ञानमपि नजातमित्यर्थः परेषां प्रवचनाद्यसम्भवउक्तः इदानीं दोषान्तरमाह (किञ्चेति) (निराश्रयेति) निराश्रयविवादायोगादित्यर्थः ।

न्ति वयन्तु नविद्मइति स्वस्यैरभिधेयं। यत्तदविद्यानिवर्तकं विश दमद्वैतज्ञानमुदेष्यति, यच्चेदानीं श्रवणादविशदमुत्पन्नं - तदुभयं भि न्नविषयमेकविषयंवा; भिन्नविषयत्वे तस्यान्यसिद्धान्तज्ञानवत्तदनुपकार कत्वम्। एकविषयत्वेप्यन्यूनानतिरिक्तविषयंवा प्रकारविशे-षविशेषितविषयंवा; आद्ये पश्चात्तनस्याप्यनिवर्तकत्वं, इदानी-न्तनस्यैववा निवर्तकत्वं स्यात्; अविशेषात्। द्वितीये ब्रह्मण-स्सविशेषत्वंस्यात्। सविशेषमिदानीं गृहीतं पश्चात्तु निर्विशेषं प्रका शिष्यतइति वैषम्यमितिचेत्; कथमिदं त्वयावगतम्। श्रुतेरितिचेत्; तर्हि श्रुतेरेव निर्विशेषज्ञानमिदानीमेव जातमिति कः पश्चात्तनस्य-विशेषः। ज्ञानमिदानीं जातं व्यवसायस्तु पश्चाद्भविष्यतीति विशेषइ तिचेन्न; वेदप्रामाण्यनिश्चये तदानीमेव व्यवसायोदयात्, तदनिश्च येतु पश्चादपि तदसिद्धेः। प्रमाणत्वाभ्युपगमेपि तदर्थविशेषेसन्दे हइतिचेत्; तर्हि विशदप्रवचनप्रवीणेभ्य आचार्येभ्यो न्यायपूर्वं द्वि स्त्रिश्शतशोवा श्रोतव्यं, नपुनश्श्रवणदशायामेव सन्दिहानेन भवता

---

(तस्येति) ध्यानादिद्वारा भाविविशदज्ञानानुपकारकत्वमि यर्थः। (इदानी-न्तनस्येति) निवृत्तस्य पुनर्निवृत्त्ययोगादित्येवकाराभिप्रायः। अविशे-षात् - स्वरूपविषयत्वाविशेषादित्यर्थः। अविशदमपि स्वरूपाज्ञाननिव र्तकं दृष्टमिति भावः। (सविशेषत्वमिति) विशदज्ञानस्य तत्त्वज्ञानत्वा दितिभावः। (कथमिति) निर्विशेषज्ञानंभविष्यतीति कथमवगतमित्य र्थः। (श्रुतेरिति) अद्वैतश्रुतेर्निर्विशेषबोधनसामर्थ्यपर्यालोचनेनेत्यर्थः। इदा नीन्तनस्यापि तादृशश्रुतिजन्यज्ञानत्वादिति भावः। व्यवसायः - अप्रा माण्यशंकाशून्यं ज्ञानं। वेदप्रामाण्यनिश्चयेपि तत्तात्पर्यसन्देहा द्व्यवसाया भावइत्याशंक्य तथापि श्रवणवेलायामेव शनैस्तात्पर्यावधारणेन मन नादिवैयर्थ्यमित्याह (प्रमाणत्वेति) न्यायत स्तात्पर्यनिर्णयेपि यावक्तत्त कांभासोत्थापित सन्देहनिराकरणाय ज्ञानान्तरं मननवदिति शंकते-

पश्चात्तनतत्त्वानेनापि ज्ञातुं शक्य । मननवदाहार्यसन्देहनिराकरणाय पश्चात्तनज्ञानमितिचेन्न, मननेनैव सभावितनिष्कम्पने पुनरन्यानका-शाभावात्; अन्यथातिप्रसङ्गात् । अस्तुतर्हि पारोक्ष्यापारोक्ष्यलक्षणवैषम्य मितिचेत्; विषयातिरेकाभावेनैव प्रागुक्तेन तदसिद्धे, सिद्धावपि वाध कत्वमप्रयोजकत्वं च प्रत्यक्षेणापि क्वचित् किञ्चित्करत्वात् । परोक्षेणापि शास्त्रानुमानजन्य-ज्ञानेनापरोक्षभ्रमवाधस्याभ्युपगमात्, प्रत्यक्षेणापि देहात्मभ्रमादिना-शास्त्रवाधानभ्युपगमाच्च । उत्पन्ना भ्रान्तिरनित्यत्वात्स्वयमेव निवर्तते, भ्रान्त्यनुवृत्तिनिवृत्तिस्तु कारणानुवृत्तिनिवृत्त्याभवति - तदनुवृत्तौतु वाध कस्य प्रत्यक्षत्वेपि भ्रान्त्यनुवृत्तिर्भवत्येव, चन्द्रैकत्वे प्रत्यक्षेपि अङ्गुल्य वष्टम्भादिना भ्रान्त्यनुवृत्तिवत् । वाक्यजन्यज्ञानमपरोक्षमितिच सर्वलो कविरुद्धं, पृथक्तत्प्रपञ्चयिष्याम । तदेतदखिलं मुखान्तरेण प्रपञ्चित भाष्ये "नतावद्वाक्यार्थज्ञान" इत्यादिनाविस्तरेण ।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्यामविधेयज्ञानवादभङ्गश्चतुर्थ ॥

---

(मननवदिति) (विषयेति) प्रमाणैक्येचेतिशेषः । एकस्यापि प्रमाणस्य वि-षयभेदेपरोक्षापरोक्षजनकत्व दृष्ट, मनसः आत्मप्रत्यक्ष वह्न्यादिस्मृतिजनक-त्वदर्शनात्, विषयैक्येपि प्रमाणभेदात्तद्दृष्ट, यथैकत्रैव वह्नौ प्रत्यक्षानुमाना भ्या, विषयप्रमाणैक्येतु नदृष्टमित्यर्थ । ननु सहकारिवैचित्र्या दात्मस्मृ तिजनकत्ववद्दृष्ट, अतइहापि मननादिसहकारि वैचित्र्या दपरोक्ष सभवती त्यत्राह (सिद्धावपीति) किंच किंभ्रान्तिनिवृत्त्यर्थ मपरोक्षज्ञान उततद-नुवृत्तिनिवृत्त्यर्थं, आद्यआह (उत्पन्नेति) द्वितीयआह (भ्रान्तीति) ननु भ्रान्तिकारणभूताज्ञाननिवृत्त्यर्थं मितिचेन्न, परोक्षज्ञानादपि तत्सभव स्योपपादयिष्यमाणत्वात् ॥

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावर तत्त्वयाथात्म्येन वरदैकदैवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायामविधेयज्ञानवादभङ्गश्चतुर्थ स्कन्ध ॥

प्रमाणबलान्मिथ्यात्वाध्यवसायेऽपि द्विचन्द्रादिष्विव दोषमहिम्ना प्रतिभासानुवृत्तिरिति न विरोध इति चेत्, समस्तद्वैतकुक्षिम्भरिणाप्यद्वैतज्ञानेनाबाधितः कोऽसौ दोषः । अविद्यैवेति चेत्, कथं तर्ह्यविद्यानिवृत्तिः, नहि तन्निवृत्तावर्थवासिन कश्चिद्बाधो नाम । तन्निवृत्तावपि तन्मूलवासना नास्तीति चेत्; सा किं ब्रह्मवत्सत्यत्वात्तत्त्वज्ञानेनाबाधिता, उत मिथ्यात्वेऽपि तदविषयत्वात् । न प्रथम — द्वैतापसिद्धान्तादिदोषप्रसङ्गात् । नच सा ब्रह्मस्वरूपानुप्रवेशिनी, भेदप्रतिभासानुवृत्तेरनिर्मोक्षप्रसङ्गात्, ब्रह्मणस्सावयवत्वादिदोषप्रसङ्गाच्च । नचासत्याविद्योपात्तावासना सत्येति सम्पद्यते । नचोपादानध्वंसे कार्यानुवृत्तिमुन्मत्तोऽप्यनुसन्धत्ते । नापि द्वितीय, वासनाया अपि श्रवणसमयसमधिगतब्रह्मव्यतिरिक्तलक्षणे कोपाधिक्रोडीकारात, अन्यथाऽविद्याया अपि बाधकज्ञानाविषयत्वप्रसङ्गात् । "नेह नानास्ति" इत्यादेरविशेषात्तद्विषयत्वमिति चेत्, तुल्यम् । यदि च वाक्यार्थज्ञानाद्वासना न निवर्तते, कुतस्तर्हि तन्निवृत्ति । न नादृष्टादे, तथासति ज्ञानबाध्यत्वाभावेन सत्यत्वप्रसङ्गात् । अत

---

(प्रमाणबलादिति) अबाधित - अनिवृत्त. । माभूदविद्यानिवृत्ति, नच तथासति बाधितानुवृत्त्यसिद्धि', मिथ्यात्वबुद्धिरेव बाध इत्यभिधानादित्यत्राह (नहीति) मिथ्यात्वबुद्धे र्बाधरूपता ह्यविद्यानिवर्तकत्वादेवेति वाच्य, अन्यथा छिन्नमूलत्वोक्तिविरोधात् । त्वत्प्रकरणपाठकाना डिम्भानामपि बाधितानुवृत्तिप्रसङ्गात्, जीवन्मुक्तानामेव हि सेष्यते, अतोऽविद्यानिवृत्तिपर्यवसितएव बाध इत्यर्थ । (सेति) तत्त्वज्ञान - ब्रह्मव्यतिरिक्तकृत्स्नमिथ्यात्वज्ञानम् । (द्वैतेति) आदिपदेन तन्मूलभेदप्रतिभासस्य सत्यत्व गृह्यते । ब्रह्मस्वरूपानुप्रवेशाभ्युक्तदोष इत्यत्राह (नचेति) (ब्रह्मण इति) आदिपदेन विनाशित्व गृह्यते । (नचोपादानेति) वासनापि भावकार्यतया अविद्योपादानेतिभाव' । एतेन 'संस्कारः कार्योऽपि ध्वंस इवानिरुपादान' इति निरस्त । किञ्च — परमते ध्वंसोऽपि भावरूपाज्ञानोपादानक एव । यद्वा — अत्र कार्यपदेनानुवर्तमानशरीरादिक विवक्षितम् । ननु ध्व

एतनस्यत, व्याघाताच्च । नहि वध्यघातकयोस्तादात्म्यन्दृष्टम् । नच सहकार्यन्तरमन्तरेण घटादिष्वपि स्वप्रध्वंसहेतुता । अहेतुकविनाशादेतुसौगतचार्वाकादिसौहार्दोद्गारप्रसङ्गः । अविद्यायाश्चतद्वदेवाहेतुकनिवृत्त्यविरोधस्स्यात् । नचदहनान्त्यशब्दचरमसंस्कारादिवदिति वाच्यम्, तत्रापि तत्तदवस्थान्तरकालविशेषादिसामग्रीसाहितपरमेश्वरसङ्कल्परूपस्य कारणस्यास्माभिरभ्युपगमात् । द्विचन्द्रादौतु अङ्गुल्यवष्टम्भतिमिरादिदोषस्य चन्द्रैकत्वज्ञानाविषयत्वात् तदुभयविषयैकज्ञा

---

समानस्य प्रतियोगिजन्यत्वा त्रव्याघातइत्यत्राह (नच सहकार्यन्तरमिति) आगन्तुकहेत्वन्तरमनपेक्ष्य स्वप्रध्वंसहेतुत्वस्य एकक्षणाधिककालवृत्तित्वस्यच व्याघातः। (अहेतुकेति) कार्यस्याहेतुकत्वाङ्गीकारेचार्वाकमतप्रवेशः, विनाशस्याहेतुकत्वाङ्गीकारे क्षणिकत्वप्रसंगेन सौगतमतप्रवेशइत्यर्थः। (अविद्यायाश्चेति) ततश्च श्रवणाद्यायासवैयर्थ्यमिति भावः। ननु क्वचि दहेतुकनिवृत्तिमात्रा न्न सर्वत्र तथाप्रसंगः, त्वयापि क्वचि दहेतुकनिवृत्तेरंगीकार्यत्वात्, यथा दहनेन दाह्यनाशेसति दहननाशः स्वतएव दृश्यते, तथैव अन्त्यशब्दस्य मरणसमयानुभवजन्यसंस्कारस्यच स्वतएव नाशइत्यत्राह (नचेति) संस्कारादिवदित्यनन्तरं अहेतुकनिवृत्तिरिति शेषः। (तत्रापीति) दहननाशो दहनस्य सूक्ष्मावस्थान्तरापत्तिः, तद्धेतुश्च दाह्यभस्मीभावावस्था, अन्त्यशब्दनाशश्च तदातनो गगने यत्किञ्चिद्द्रव्यसंयोगादिः, तद्धेतुश्च प्रसिद्धएव-संस्कारनाशावस्था नरकानुभवादिः अतिरिक्ताभावपक्षे प्येतएवागन्तुकहेतवः, उपान्त्यशब्दस्तन्नाशोवाऽन्त्यशब्दनाशकः। ईश्वरसंकल्पोप्यागन्तुककारणमित्याह (ईश्वरेति) अतस्स्वतोनिवृत्तेरसंभवा द्वाक्यजन्यमिथ्यात्वज्ञानादेवाविद्यावासनानिवृत्तिः, ततश्च नभेदप्रतिभासानुवृत्तिसंभव इतिस्थितम् । यद्येव मिथ्यात्वज्ञानेसति भेदप्रतिभासासंभवः, कथंतर्हि तस्मिन्सत्यपि चन्द्रभेदप्रतिभासइत्याशंक्य वैषम्यमाह (द्विचन्द्रादाविति) द्विचन्द्रादौतु दोषस्याबाधइति तन्मूलभ्रमपरम्परानुवृत्तिर्घटतइत्यन्वयः। चन्द्रैकत्व चन्द्राभेदः। (तदुभयेति) यथा ताराप्रकाशांशस्य

नोदयेऽपि प्रार्थस्थतारकाप्रकाशस्येव दीपप्रकाशांशस्य चन्द्रैकत्वप्रकाशेनविरोधाभावात्, दोषो मिथ्येति तु ज्ञानस्य लौकिकानामनुदयात्, यौक्तिकमिथ्यात्वज्ञानस्यैव भ्रान्तित्वेन तस्यान्यबाधाबाध इति तन्मूलभ्रमपरम्परानुवृत्तिर्घटते, तद्विषयान्यथात्वप्रमापेन भयाविकम्पादिकार्यनिवृत्तिश्च । तत्र तु न तथा, कारणभूताविद्यावत्कार्यभूतशोकादिवच्च, मध्यगतभेदवासनाभेदज्ञानयोरप्येकहेलयैव निवार्यत्वात्, अनुवृत्तावपि बाध्यबाधकयोरनियतत्वेन वास्तवप्रामाण्याभावात् निर्दोषेण बाधकत्वस्य भावाच्चेति । तदेतन्मर्मभिप्रेत्य "सत्यपि वाक्यार्थज्ञाने" इत्यादि "भयादिकार्यं तु निवर्तते" इत्यन्तं भाषितम् ॥

इति श्री कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्यां बाधितानुवृत्तिभङ्गवादः पञ्चमः ॥

---

चन्द्रैकत्वप्रकाशविरोधिविषयत्वाभाव, तथा दीपप्रकाशांशस्यापि चन्द्रैकत्वप्रकाशविरोधिविषयत्वाभावादित्यर्थः । बाधकज्ञाननिषेध्यत्वेन विषयस्यैव बाध्यत्वादिति भावः । कस्यचिद्दोषमिथ्यात्वज्ञानेऽपि चन्द्रभेदप्रतिभासोऽदृश्यत इत्यत्राह (दोषो मिथ्येति) (यौक्तिकेति) स्वबुद्धिमतिकल्पित दुर्न्यायमूल दोषमिथ्यात्वज्ञानस्य मिथ्यात्वबाधकनिरासादेव भ्रान्तितया दोषाणां सत्यतया न बाध इत्यर्थः । वस्तुतस्तत्पक्षेऽपि दोषस्य यौक्तिकज्ञानादनपाय एवेति तन्मूलभ्रमोऽपि घटत एव, विरोधितत्त्वविषयत्वेन निवर्तकत्वे अविद्यावदिदानीमेव वासनाया अपि निवृत्तिप्रसङ्गात्, बाध्यबाधकज्ञानयोर्मिथ्यात्वाविशेषेण वास्तवप्रामाण्यतदभावाभ्यामपि विशेषाभावात्, बाधकज्ञानस्य बाध्यप्रतिभासापेक्षया विशेषणस्यालाभाद्वा पश्चादप्यनिवृत्तिप्रसंगात् एकहेलयैव निवार्यत्वं वाच्यमित्याह (कारणभूतेति)

इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्य पादसेवासमधिगत परावरतत्त्वयाथात्म्येन तदेकदेवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध महाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायां बाधितानुवृत्तिभङ्गः पञ्चमस्कन्धः ॥

श्रीमतेरामानुजायनमः ।

श्रीमतेनिगमान्त महादेशिकायनम ।

अथ पष्ठस्कन्धः ।

दृष्टानुश्रविकार्थजातविमुखान् पुंसोऽभिदृष्यश्रुती-
यज्ञादिर्यदुपास्तिसाधनतया साक्षाद्विधिप्राभते ।
लीलाभोगविभूतियुग्म भरितस्वात्मप्रदानोन्मुख
श्रीमानस्तुसमे समस्तदुरितोत्ताराय नारायण ॥

यदुच्यते, " तमेतंवेदानुवचनेन ब्राह्मणाविविदिषन्ति यज्ञेन दानेनतपसानाशकेन" इत्यत्रयज्ञादिकंविविदिषासाधनत्वेन विधीयते, नतु वेदनसाधनत्वेन, वस्तुविरोधात् श्रुत्यक्षरपर्यालोचनाच्च, विविदिषन्तीति हिश्रूयते नपुनर्विदन्तीति । तत्रब्रूम, कोऽसौवस्तुविरोधस्तावत् , किं ज्ञानस्य यज्ञादिभिस्साधयितुमशक्यत्व, उतोपज्ञानाङ्गभूतशमादिप्रत्य नीकत्व । यद्वा तत्वज्ञानफलापवर्गप्रत्यनीक त्रिवर्गसाधकत्व, यद्वा आश्रमाङ्गतयाविहितानां नित्यत्वे नित्यानित्यसंयोगविरोध, अन्योवा कश्चिदिति । नप्रथम, सहियज्ञादिकमन्तरेणउत्पत्तिदर्शनाद्वा यज्ञा दिसन्निधानेप्यनुत्पत्तिदर्शनाद्वा, आद्येनसिद्धि प्राचीनैश्वर्याचीनैश्चा धिकारिष्वननुष्ठितशुद्धधर्मेषुविद्योत्पत्तेरसिद्धत्वात् ।

---

अद्वैतिजालकलिलेन मुदीर्णदर्पमीषज्जलकरमनाहतमर्मगाथै ।
स्वचमितेन निगमांतगुरो. प्रबन्धै· तैब्रह्मतत्त्वमिहन प्रतिबोधयन्तु ॥
सकलजनहितेच्छु श्रीनिवासार्यवर्यो-
हृदि निहितहितार्थे श्वेत्नर्यीमातुरेष ।
कुमतिविहतवाचो मह्युपाक्ष्यदस्या
श्चिरतरमविकृष्टा तद्यवस्थान्वयरूपत ॥

( दृष्टेति ) इहामुत्रार्थफलभोगविरक्तान् । साक्षाद्यदुपास्तिसाध नतयेत्यन्वय । ( विविदिषन्तीतिहीति ) सन्नन्तप्रकृतिधात्वर्थेन मा न्वय. उपसर्जनत्वात् । ( आश्रमाङ्गतयेति ) आश्रमप्रयोज्यतयेत्यर्थ· । अनेन नित्यत्वविवक्षित । शुद्धधर्मकारणान्तराभावादिवक्ष्यचिरस्वस्यैवानिवृत्ते

द्वितीये त्वप्रयोजकता, सामग्रयैवहि कार्योत्पत्ति र्नपुनर्हेतुमात्रात ; सम्भवतिच प्रायश कर्मकर्तृसाधनवैगुण्य, अन्यथा चित्रापशुफलत्वादावपि कस्तेसमाश्वास । तस्यास्तत्साधनत्व विदधातिश्रुतिरितिचेत् , अत्रापियदिश्रुतिर्विदधाति तदा तद्वदेव समाश्वसिहि । अन्यथाविविदिषासाधनत्वेपि त्वयानसमाश्वसितव्य, तत्रापि साध्यसाधनभावस्य श्रुत्येकावसेयत्वात् । ' कुर्वन्नेवेहकर्माणि ” त्यादिचार्वाकदुर्वादस्य त्वयाप्य स्मर्तव्यत्वात् , व्यभिचारस्यचसमत्वात् । एतेन - वाक्यजन्यप्रमितिरूपस्य सस्कारजन्यस्मृतिसन्ततिरूपस्यवा वेदनस्य किंकर्मापेक्षयेतिनिरस्त, इच्छया अप्यनुकूलता बोधावतिनोत्पत्ते किंकर्मापेक्षयेति समत्वात् । अन्त करणनैर्मल्यद्वारेणेतिचेत् तुल्य, “ यत्रोभयोस्समोदोष ” इत्यभियुक्तवचन किमर्थमिथ विस्मरसि । “ कषाये कर्मभि पक्वे ततोज्ञान प्रवर्तते ” इत्यादिवाचनिकार्थातिलङ्घन तवाधिकम् । नापि द्वितीय ; शमादेरविहितप्रतिषिद्धनिषिद्ध विषयत्वेन नियोगतया

---

कार्याभाव इत्याह ( सम्भवतीति ) ( चित्रापशुफलत्वादावपीति ) चित्राया' पशुफलत्वादौ । ( तस्यादिति ) तथाच श्रुतिबलात्साधनत्वे सिद्धे कारणान्तराभावात्कर्मादिवैगुण्याद्वा कार्याभावइत्युन्नीयत इति भावः। ( अत्रापीति ) तथाच श्रुत्यक्षरपर्यालोचनैव कार्या नोक्तार्थविरोधइत्यर्थ । अन्यथा - श्रुत्यासमाश्वासाभावे । चार्वाकमतप्रवेशेन यत्रकुत्रचिद्यस्य कस्यापि कारणत्वमङ्गीकुर्वता कर्मणा वेदनसाधनत्व न निराकर्तु शक्यमित्यभिप्रायेणाह ( कुर्वन्नेवेति ) विस्मरणशीलस्य व्यभिचारनिमित्ताशङ्का युक्तार्थस्मारणेन परिहरति ( व्यभिचारस्येति ) एतेन – वक्ष्यमाणेन ( किं कर्मापेक्षयेति ) अन्यथा घटमानयेति वाक्यार्थज्ञानाय घटादिस्मरणायच यागाद्यनुष्ठानप्रसङ्गादितिभाव । ( इच्छयापीति ) यदीच्छामात्रे तदपेक्षाभावेपि प्रमाणबलादिह तदपेक्षा तदा प्रकृतेपि तुल्यमिति भाव । अविशेषे कथ विविदिषासाधनत्वप्रतिक्षेपइत्यत्राह ( कषायइति ) ( अविहितेति ) अविहितश्च तत्प्रतिषिद्ध

विहितेभ्य कर्मभ्यो व्यतिरिक्तविषयत्वात् । विहितस्यच " धर्मे णपापमपनुदति ", " कषायपक्ति कर्माणि ज्ञानतुपरमागति " इत्यादिभिर्विद्योपकारकत्वस्यैव श्रुतत्वात् । नचतृतीय, फलाभिसं धिविरहादेवत्रिवर्गानारभात, अनेकफलसाधनस्यापि ज्योतिष्टोमादे रभिस धिविशेषेण फलप्रतिनियमस्य सर्वैरभ्युपगन्तव्यत्वात् । अतएवनच तुर्थ, तत्रापि विनियोगपृथक्त्वेन नित्यानित्यसंयोग विरोधाभावात । तदेतत्सर्व सूत्रकारे रेव विस्पष्टमुक्तम् - " सर्वापेक्षाचयज्ञादिश्रुतेर- श्ववत् " " शमदमाद्युपेतस्स्यात्तथापितुतद्विधे स्तदगतया तेषा मप्यवश्यानुष्टेयत्वात् " " विहितत्वाच्चाश्रमकर्मापि " " सहका रित्वेनच " " अग्निहोत्रादितुतत्कार्यायैवतद्दर्शनात् " इत्यादिभि । याचते श्रुत्यक्षरपर्यालोचना सोऽपिहस्तसमालोच, " सोऽन्वेष्टव्य", सविजिज्ञासितव्य. " " तद्विजिज्ञासितव्यम् " " श्रोतव्योमन्तव्यो निदिध्यासितव्य " इत्यादिश्रुतिशीलापरामर्शात्, नहि तेपुसन्प्रत्य यार्थविधिपरत्व भवतोपि स्वीकृतम् ।

---

श्वेत्यर्थ । शमादेरेतावन्मात्रविषयत्वे नियामकमाह ( विहितस्यचेति ) ननु फलाभिसन्धिविरहेपि तद्योग्यस्य कथ तदनारम्भकत्व, नहि दर ह्यर्थ स्पृष्टएव वह्निर्दहतीतिनियमोस्तीत्याह ( अनेकेति ) श्रुत्येकसमधि गम्येऽर्थे तत्तत्कामाधिकारबलाद्यथाश्रुति तथांगीकारइतिभाव । ( अ तएवेति ) फलाभिसन्धितदभावाभ्यामेवेत्यर्थः । तदेव विवृणोति ( तत्रापीति ) ( हस्तसमालोचइति ) हस्तस्येव समालोचनमित्यर्थ । एकहस्तवदेवहीतरहस्तोऽपि । अयश्च घञन्तत्वान्नियतपुल्लिंगः ( सोऽ न्वेष्टव्यइति ) आदिशब्देन " तद्विजिज्ञासस्व " इत्यादेस्संग्रह । प्रकृ त्यर्थस्यैव वाक्यार्थान्वयेपीच्छानुवाद श्रुतेश्शील, तथाचोपसर्जनेनापि- प्रकृत्यर्थेन विध्यन्वयस्तत्कारणान्वयो युज्यतेहीतिभावः । ( तेष्विति ) " विजिज्ञासितव्यः " " विजिज्ञासितव्य " " निदिध्यासितव्य. " इत्या

विधिबलावसितपुरुषार्थसाधनतार्थसिद्धेच्छानुवाद रूपताप्रत्ययस्य, ध्यायतीत्यादिविध्यन्तरैकार्थ्यात् । तत्र शाब्द प्रत्ययार्थप्राधान्य मनादृत्येच्छया इष्यमाणप्रधानत्वादार्थ प्रकृत्यर्थप्राधान्य स्वीक्रियतइति चेत्, तर्हि " क्रियावानेषब्रह्मविदा वरिष्ठ, ' कर्मणैवहि संसिद्धि ' कषायपक्तिः कर्माणि ज्ञाने तु परमा गति, कषाये कर्मभि पक्वे ततो ज्ञान प्रवर्तते " इत्यादिप्रमाणसहस्रैकार्थ्यात् दशायामपि वेदनपरत्वमङ्गीकुरुष्व । लोकेत्र असिना जिघांसति अश्वेन जिगमिषति इत्यादिषु प्रकृत्यर्थे करणान्वयो बहुलमुपलभ्यते । स त्वासेरश्वस्य च हननगमने प्रत्यसाधनत्वायोगात् हनानादिसाधनत्वस्या-न्वयव्यतिरेकसिद्धत्वाच्च अगत्याप्रकृत्यर्थसाधनत्वाश्रयण, इहतु न तथा, अन्त करणनैर्मल्यद्वारेण सत्त्वविवृद्ध्युपकारकत्वस्य ज्ञानतदिच्छयोरविशेषादिति चेन्न, अनन्यपरत्वस्योपपादितत्वात्, अयोगस्य चात्राप्यविशेषात् । तथाहि योयं विविदिषाकामो यज्ञादिष्वधिक्रियते सकिं तदानीं वेदनमिच्छति उतन, आद्ये विविदिषासिद्धैवेति न तस्या यज्ञादिसाध्यत्व, तथाच चक्रकम्, वेदनेच्छायां जातायामेव विविदिषेच्छा जायते, तस्यां जातायां कर्मानुष्ठानम्, ततो विविदिषेति । अत्रैकैकोभयपर्यवसायेनात्माश्रयान्योन्याश्रयावप्य त्रभी

---

द्धिष्वित्यर्थ । अत्र वाक्येष्विति विशेष्यमध्याहार्यम् । शङ्कते ( विधिबलेति ) अनुवादरूपत्वे हेतु ( ध्यायतीत्यादीति ) ( शाब्द प्रत्ययार्थप्राधान्यमनादृत्येति ) अत्र हेतुरनुवादरूपत्वम् । ( स्वीक्रियतइति ) प्रकृत्यर्थ नैव विध्यन्वयहेतुतयाद्रियतइत्यर्थ । उपसर्जनेन प्रकृत्यर्थेन करणान्वयोपि लोके दृष्टइत्याह ( लोकेत्वेति ) शङ्कते ( अत्रासेरिति ) ( अनन्यपरत्वस्येति ) " क्रियावानेषब्रह्मविदा वरिष्ठ " इत्यादिवेदनसाधनत्वप्रतिपादक श्रुतिबलादिति भाव । ( अयोगस्येति ) इच्छान्वयायोगस्येत्यर्थ । ( तथेति ) तथाहि - यज्ञादिसाध्यत्वइत्यर्थ । ( वेदनेच्छायामिति ) विविदिषाया स्वत प्रयोजनत्वाभावेन

ष्यो। द्वितीयेपि वेदनस्यानिष्टत्वे विविदिषाप्यनिष्टैव स्यात्, तद्वि षयत्वात्तस्या, विविदिषापि वेदनं साधयेत्, तथापवर्गादिकमिति न तेनादि तस्यामभिलाषसम्भव। ननु वेदनौन्मुख्यलक्षणविविदिषा पूर्व सङ्गता। तदर्थप्रवृत्तिपर्यन्तानु साध्यतयाभिमतेतिचेन्न, तादृशतीव्रे च्छायाश्च उत्पत्त्यनुपपत्तिविकल्पे प्रागुक्तदोषानतिलङ्घनात्। नहि वेद ने तीव्रेच्छायामसम्भवन्त्या तादृशीमपिताभिच्छेत्, तदुपायवर्गानुष्ठान मेवा वा सहेत। ननु दृष्टमेतत् यदनुभुक्षापिपासादिकामनया भोजनमुपादित्सते, तत्रापि भोजनादेरिष्टत्वानिष्टत्वविकल्पेन प्रागुक्तप्र सङ्गोदुर्वार। तत्र य परिहारस्ते सनोत्रापि भविष्यतीतिचेत् तन्न, भोजनादेरसामान्यतोऽनुकूलत्वज्ञानादेवेष्टत्वसिद्धे। तथापि दोषवशात्तदा तनमारोग्यात्मक प्रातिकूल्यमपनेतव्यमिति तावन्मात्रार्थं भेषजोप देश, न पुनरिष्टत्वस्वरूपनिष्पत्तये। अत्रापि तर्हि तथास्तु, सामा न्यतो वेदनस्येष्टत्वेऽपि तादात्विकत प्रातिकूल्यापादकरजस्तमोनिबर्ह णेन अन्तःकरणशुद्ध्यर्थं कर्मणा विनियोगइतिचेत्,

---

वेदनार्थमेवोद्देश्यत्वादिति भाव। (तद्विषयत्वादिति) तस्या वि विदिषाया। ननु वेदनेच्छाभावे कथं विविदिषेच्छाया असम्भवइत्या काङ्क्षाया तद्विषयेच्छायास्स्वयं प्रयोजनत्वाभावेन तत्साधनत्वेनैवोद्दे श्यत्वादित्याह (विविदिषापीति) अपवर्ग - अविद्यानिवृत्ति। आ दिशब्देनानवच्छिन्न ब्रह्मानन्दानुभव उच्यते। (तदर्थेति) वेदनार्थश्र वणाद्यनुष्ठानपर्यन्तेत्यर्थ। (प्रागुक्तेति) तीव्रविविदिषाहेतुभूत यज्ञा द्यधिकारिणि तीव्रवेदनेच्छाभावे वेदनौन्मुख्यमात्राद्वेदनसाधनश्रवणादा विव ततोपि व्यवहिताया श्रवणादिहेतुतीव्रविविदिषायामिच्छानस्या त, तीव्रविविदिषाया॰[illegible] यज्ञाद्यसाध्यत्ववचनस्यो प्रसङ्गइत्यर्थ। (तथापीति) प्रातिकूल्यशङ्का प्रतिकूलम् भोजनमतिकूलमित्यर्थ। प्रा तिकूल्यहेतुपरोधा भोजनस्य प्रातिकूल्यहेतुरित्यर्थ। (तत्प्रातिकूल्येति) वे दनेच्छायासत्यामपि रजस्तमोभिभूतत्वात्साधनश्रवणादौ दुस्साध्यगुरु शिश्रूषादिसाध्ये प्रातिकूल्यबुद्धिर्भवतीति रजस्तमोनिबर्हणार्थमित्यर्थ।

तर्हि विविदिषासाधनश्रुति परियक्षेत । अवान्तरव्यापार त्वा दविरोत्र इतिचेत, तर्हि वेदनसाधनत्व मप्यनुपपन्ना, तत्पूर्वभाविन स्सर्वस्यापि यज्ञादिकर्मणो तद्व्यापार नोपपत्ते । एवञ्चसति " क्रियावानेषब्रह्मविदांवरिष्ठ " " कषायेकर्म भि पक्वे ततोज्ञान प्रवर्तते " पुण्यप्रज्ञावर्धयति क्रियमाण पुन पुन " इत्यादिभिरैकार्थ्यंच । अतो यज्ञादिकर्म वेदनसाधनमेव । ननु विविदिषासाधनत्वेयद्बोद्य यज्ञादे तद्भक्तिसाधनेऽपि समान । तथाहि, किंभगवतिभक्तिमाभाकक्कामयते इत तद्विदुर ? नप्रथ म, भक्तेर्निष्फलत्वेन साध्यत्वायोगात । नद्वितीय, भगवद्भक्तिवि दुरस्य तद्भक्तावपि नैरपेक्ष्यात, भगवत्प्राभेदानिर्वाहेऽपि प्राग्वदे वदोषइति तन्न, प्रीतिरूपज्ञानविशेषोऽहि भक्ति , प्रीतिश्च तारतम्यवता विषयस्वभाव विशेषाभिमानाभ्यासभेषजादिभि प्रेमवृद्धि कामशास्त्रा दिष्वपिसम्मता, पुरुषस्यतत्कामना सम्भवति नवेयेतावदेव चिन्तनीय ।

---

(तर्हीति) विविदिषाया पूर्वोक्तत्वा द्रजस्तमोनिबर्हणार्थमेव कर्मानु ष्ठानमिति विविदिषार्थतया यागादिक श्रुतिप्रतिपाद्य नस्यादित्यर्थ । गुरुशुश्रूषादिदु ससाध्येष्विश्रवणादौ प्रातिकूल्यबुद्धिविरोधिनीच्छा रजस्तमो निबर्हणमन्तरेणनभवती ति यज्ञादिभिस्तादृशेच्छायाजननीयाया रजस्तमोनिबर्हणस्यावान्तरव्यापारात यज्ञादेर्विविदिषार्थतया श्रुतिप्र तिपाद्यत्वमविरुद्धमितिशङ्कते । (अवान्तरेति) यद्यप्येव सतिपूर्वोक्ता न्योन्याश्रय स्थिरएव । तथापि दूषणान्तरमाह (तर्हिवेदनेति) एव व्यापा रस्याव्यवधायकत्वेन विविदिषाकारण याङ्गीकारे रजस्तमोनिबर्हण प्रा तिकूल्यनिवृत्तिविविदिषा श्रवणादिव्यवधानमङ्गीकृत्य वेदनसाधनत्वम ङ्गीकर्तु शक्यमेव, बाधकाभावात, एवञ्च श्रुत्यन्तरानुसाराद्वेदनसाध नपरत्वमेवास्यवाक्यस्याङ्गीक्रियतामितिभाव । (तद्भक्तावपीति) तस्मि न्निवेतिभाव । भक्तिविदुरस्यापि भक्तेर्मोक्षसाधनत्वज्ञानतस्तभक्तीच्छा सम्भवत्येव तथापि प्रथमपक्षोऽस्मिभ्युपेत्याह (तन्नप्रीतिरूपेति) (भेषजा दिभिरिति) आदिशब्देनमणिमन्त्रादिग्रह । ( कामशास्त्रादिष्विति )

तत्र यदि सजातमात्रादतिशयितस्य प्रेम्णः फलान्तरं प्रमाणतः सिद्ध्येत् तदा तथाविधं तस्यातिशयमभिवाञ्छेदेव । नच तावता तथाविधस्यातिशयस्यापि निष्पन्नत्वप्रसङ्गः, ज्ञानवदुपपत्तेः, सामान्यतोऽवगतेहि विशेषतो ज्ञानायव्याप्रियते, अन्यथा जिज्ञासैव सर्वत्र नस्यात् । नन्वेवं विविदिषायामप्येवमस्त्विति चेन्न, विशेषेच्छाया एव प्रागेवोदयात्, नहिपूर्वं सामान्यतो ज्ञानमिच्छति पश्चाद्विशेषतइति सम्भवति । नच विषयविशेषावच्छेदमन्तरेण इच्छाजाति

---

आदिशब्देन "रोचनालक्ष्मणामूल कल्कलिप्ततनूर्वधूः । ऋतौप्राप्नोतिसौभाग्यं दयितप्रियतामपि" ॥ इत्याद्युक्तायुर्वेदसंग्रहः । (सजातमात्रादिति) प्रेम्णइतिविशेष्याध्याहारः । (ज्ञानवदिति) विशेषतोज्ञानेच्छायासत्यामपि विशेषतोज्ञानाभावादित्यर्थः । व्याप्रियत इत्यनन्तरं नतुविशेषताज्ञातइत्याध्यहारः । (अन्यथेति) विशेषतोज्ञातेचेदित्यर्थः । सिद्धइच्छाविरहादितिभावः । (विविदिषायामप्येवमिति) यथाजिज्ञासाकारणतयापूर्वंज्ञानसत्त्वेपि ज्ञानान्तरविषयिणीजिज्ञासा तथावेदनेच्छायाविविदिषेच्छाकारणतयापूर्वंसत्त्वेपि विविदिषान्तरविषयिणीच्छास्त्वित्यर्थः । कारणीभूतायाः अपिवेदनेच्छायाः इष्यमाणतयाभिमतेच्छासजातीयत्वाद्विषमोदृष्टान्तइत्याह (न विशेषेच्छायाइति) विशेषविषयायाः इच्छायाइत्यर्थः । ननु विशेषविषयेच्छासिद्धावपि स्वरूपतएव तद्विजातीया तद्विषयेच्छैवेष्यतामित्यत्राह (नच विषयेति) यद्यप्येकस्मिन्नेवविषये इच्छायामुत्कटत्वानुत्कटत्वरूपः जातिविशेषो लोकसिद्धः, तथापि पूर्वोक्तरीत्या उत्कटेच्छाप्यत्रास्तीति तात्पर्यम् । यद्वा - जिज्ञासाविषयीभूतविशेषज्ञानस्य कारणीभूतसामान्यज्ञानादिवात्र इष्यमाणविविदिषायाः विद्यमानविविदिषापेक्षया विषयविशेषावच्छेदात्र वैलक्षण्यं भ्रम, किन्तु लोकसिद्धोत्कटत्वादिनैवेत्याशङ्क्य तदपि मत्कृते नसम्भवतीत्याह (नच विषयेति) विषयविशेषावच्छेदातिरिक्तो यो जातिविशेष औत्कट्यादिरूपस्समत्कृते न सम्भवतीत्यर्थः । तादृशोत्कटवेदनेच्छायाः असिद्धौ उत्कटविविदिषाविषयकेच्छायाः

विशेषः कश्चित्संभवति । भक्तौतु भोग्याकाराविर्भाव तारतम्यवशा त्तारतम्यमुक्तमिति । इहापि ततएव तारतम्यमितिचेत् ; अस्तुत त्तथापि काम्यत्वदुर्वच - तथाविध विषयविशेषितस्य वेदनस्य काम्य त्वमन्तरेण तदसिद्धेः, तत्काम्यतायाश्चसिद्धौसिद्धा तथाविधवेदनेच्छेति कथंसाकाम्या, अतस्सिद्धं

---

असंभवादित्यर्थः नतु इष्यमाणभक्तावपि कथं प्रकृते जातिविशेषसंभ व इत्याकांक्षायां प्रीतिश्च तारतम्यवतीत्यादिना पूर्वमुक्तं स्मारयति ( भक्तौत्विति ) भोग्यस्याकार भोग्याकारः प्रियत्वमितियावत् । आ विर्भावोनिष्पत्तिः । प्रियत्वतारतम्यस्य प्रीतितारतम्याधीनत्वात प्रीतिता रतम्येतात्पर्यम् । तथाच प्रीतिरूपभक्तितारतम्यमेव भक्तिविषये का मनायां हेतुरित्यर्थ । ननु यादृशीभक्तिस्त्वयेष्यमाणत्वेनाभिमता त- द्रूपवेदनवि षयत्वमेवेष्यमाणायां विविदिषायां विशेषोस्त्वित्याशङ्कते ( इ- हापीति ) विविदिषायामित्यर्थः ( काम्यत्वमिति ) विविदिषायाइति शेष । ( तथाविधेति ) अतिशयितप्रीतिरूपत्वात्मको य इष्यमाणविविदिषा- याः प्रकारतया विषयः तद्विशेषित यद्वेदनं तत्कामनामन्तरेण त- द्विषयविविदिषाकामनापि न संभवतीत्यर्थः । नन्विच्छार्थं कर्मानुष्ठा नस्यात्माश्रयप्रसक्तौ क्वचिदपीच्छानसंभवेत् इच्छाहेतुभूतकर्मानुष्ठाना योगात , नचेच्छायाविषयवैलक्षण्यज्ञानमात्राधीनत्व , वैलक्षण्ये ज्ञाते पि कस्यचिदिच्छानुत्पत्तिदर्शनात् । अतः कस्यचिदिच्छोत्पत्तेः कर्म हेतुकत्वमाश्रयणीयम् – तच्चैव सत्यनुपपन्नमित्यतआह ( अतस्सिद्ध- मिति ) अस्मन्मते इच्छार्थं कर्मानुष्ठान नास्त्येव, भोगादृष्टोद्बोधि तपूर्ववासनासचिवाद्विषयवैलक्षण्यज्ञानादिच्छोत्पत्त्युपपत्ते । नचाज्ञात सुकृतवशाद्धर्मरुचिवद्यज्ञादिना वेदनेच्छासिद्धिरिति वाच्यम् ; बहु थव्ययायाससाध्यानां यज्ञादीनामज्ञातसुकृतहेतुरूपत्वासंभवात , " यज्ञेन विविदिषन्ती" तिवाक्यस्य ह्यर्थश्चिन्त्यते, अतो बुद्धिपूर्वकमेव एतद्वा

यज्ञादिकर्मविविदिषासाधनत्वेन न विहितमिति । तदेतत्सर्व मभिसन्धायाह-- " एवं रूपापानुगानुस्मृते स्साधनानि यज्ञादीनि कर्माणीति " यज्ञादिश्रुतेरश्ववदि " " त्यभिधास्यते " इति ॥

इतिश्री कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु

शतदूषण्यां विविदिषासाधनत्व भङ्गवाद. षष्ठः ।

---

क्यविहितयज्ञाद्यनुष्ठानम् । तदिदमुक्तं ( यज्ञादिकर्मेति ) ( विविदिषासाधनत्वेन नविहितमितिच ) अत्र विविदिषन्तीत्यस्य सन्निधौ " मनसैवानुद्रष्टव्य " मिति विशदवेदनं विहितम्, " एतमेव विदित्वामुनिर्भवति " इतिस्तुतम् । अतो विधिस्तुतिविषयस्यैव वेदनस्यात्रविध्यन्तराकांक्षा – नतु तदुभयरहिताया विविदिषाया. " इति तत्वटीकोक्तमप्यनुसन्धेयम् ।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगत

परावरतत्वयाथात्म्येन तदेकदेवतेन तच्चरणपरिचरण

परायणेन तत्प्रसादलब्धमहाचार्यापरनामधेयेन

रामानुजदासेनविरचितायां शतदूषणी

व्याख्यायां चण्डमारुताख्यायां –

विविदिषासाधनत्वभंगष्षष्ठः

॥ स्कन्धः ॥

मनसः सर्वज्ञानकरणसाधारणसहकारित्वं किं न जानासि । तथापि विनिगम-
नायां को हेतुरिति चेत्, न, अन्यस्याभावतमसिद्धियितस्यत्वा वाक्यश्रवणा दशमोऽस्मीति प्रत्यक्षप्रत्ययात् । नचानापरोक्षनमारोपितं, बाधकाभावात् । नच सम्प्लवे भेदाग्रहा त्व्द्यवहारः, कदाचिदपि तत्र धीभेदानुपलंभात् । अतो वाक्यजातीयस्य क्वचित्प्रत्यक्षज्ञानजनकत्वसिद्धौ क विरोधावकाशः । अन्यदपि वाक्यं किं नजनयतीति चेत्, न, गोजातीयत्वे गाकरः किं न दुग्धे दुग्धमितिवदुपहासनात् । अस्ति तत्रावान्तरोपाधिरिति चेत्, अस्त्वत्रापि कथित । नच तद्ज्ञानं तत्कार्योपाधिरिति वाच्यं, तज्ज्ञानस्य तत्कारणत्वानभ्युपगमात् । अन्यथा अतिप्रसंगात् । यथाहुः "नकारण परिज्ञानं तत्कार्योपत्तिकारणं । नहि बीजापरिज्ञाने नांकुरो परिवार

---

मिति वादिन एवाशंकेति । ( मनसइति ) तथाच तस्यां न पूर्वोक्तगौरवमितिभावः । विशेषिते अपि शब्दकरणकत्वनिर्द्धारणं कथमिति पृच्छति (तथापीति) (अन्यस्येति) तत्र चक्षुरादेरभावात्, मनसश्चापि करणत्वानङ्गीकारात् शब्दस्यैव तत्र करणत्वं वाच्यमिति भावः । (प्रत्यक्षप्रत्ययादिति) प्रत्यक्षत्वमानुभाविकमितिभावः । यद्यपि नेदं रजतमितिवत्प्रत्यक्षबाधः, तथापि यौक्तिकबाधोऽस्त्येव, मनस्संवलितसामग्र्या शब्दसंवलितसामग्र्याश्च विद्यमानतया परोक्षापरोक्षरूपकार्यद्वयस्यावश्यकत्वात्, अतोदशमोऽस्मीत्येकैवापरोक्षप्रतीतिरितिबुद्धेर्भ्रमत्वमवर्जनीयमेवेतिशङ्कां परिहरति (नचसंप्लवइति) (भेदाग्रहादिति) भ्रमस्याप्युपलक्षणं । (कदाचिदिति ) तत्र-तादृशस्थले । करणान्तरसन्निधानस्थले धीभेदानुपलम्भेन मनसः करणान्तरसहकारित्वमेव, न पृथक्करणत्वमित्यर्थः । यद्यपि मनसः करणत्वं स्वमते कुत्रापि नास्त्येव, तथापि परेण स्वमतेन शंकिते तदभ्युपगमेन परिहृतमिति ध्येयं । ( क्वेति ) शब्दस्य प्रत्यक्षजनकत्वं नविरुद्धमित्यर्थः । ( अस्तीति ) सौचविशेषितं गोत्वमित्यर्थः । नन्वस्माभिरज्ञातत्वं यद्यपि न दोषः, तथा प्यस्यैतादृशत्वे वस्तुसत्त्वेव नस्यादित्यत आह

णम्'' इति । नचाप्यात्यन्ताज्ञानता, स्वतोऽपरोक्षार्थगोचरत्वस्योपाधेरव
धारणात् । नच— तत्वमस्यादिवाक्यस्य प्रत्यक्षज्ञानजनकत्वे किं प्रमाण
मितिवाच्यम् , निवर्त्यमिथ्यात्वान्यथानुपपत्त्यैव तत्सिद्धेः । स्वत शुद्धेपि हि
विश्वसाक्षिणि ब्रह्मणि स्फटिकमणिघटितदाडिमीकुसुमरागोपरागवत्
अवभासमात्रसिद्धि रियमशुद्धिः, साच ज्ञानमात्रनिवर्त्येति ''तरतिशोकमा
त्मवि'' दित्यादिश्रुतिशतसिद्ध, मिथ्याभूतस्य च ज्ञानमात्रनिवर्त्यत्वं युक्तं, नच
परोक्षंज्ञानंनिवर्तकंदृश्यते । अतः परिशेषादपरोक्षमेव ज्ञानं निवर्तक
मितिस्थिते, नतावत्करणमिन्द्रियं, बाह्येन्द्रियाणां प्रत्यक्पराङ्मुखत्वात्,
मनसोपि सोहमस्मीत्यधिगतार्थे स्वातन्त्र्येणाप्रवृत्ते, शब्दसंस्का
रादिपुरस्कारेतु तस्यैव करणत्वोपपत्ते:, मनसश्च नित्यशुद्धबुद्धमुक्तस्वभाव
ब्रह्मगोचर साक्षात्कारकरणत्वस्या दृष्टचरत्वेन शब्दस्य तत्स-
हकारित्वकल्पनायोगात् , तथात्वेच श्रवणादिनैष्फल्यात् । ''न चक्षुषा गृ
ह्यते नापि वाचा'' ''मनसातुविशुद्धेन'' ''मनसैवेदमाप्तव्य'' मित्यादिश्रुतीनां

---

(नचास्येति) ( निवर्त्येति )तज्ज्ञाननिवर्त्यस्य मिथ्यात्वं तज्ज्ञानस्य साक्षा
त्त्वमन्तरेणानुपपन्नमिति प्रदर्शनार्थं निवर्त्यपदम्, प्रपञ्चरूपस्य निव
र्त्यस्य मिथ्यात्वं तत्वमस्यादिवाक्य स्यापरोक्षजनकत्वमन्तरेणानुपपन्न
मित्यर्थः । मिथ्यात्वं ज्ञाननिवर्त्यत्वञ्च प्रपञ्चस्योपपादयति ( स्वतइत्यादि-
ना ) ज्ञानमात्रनिवर्त्यत्वे युक्तिमप्याह ( मिथ्याभूतस्येति ) मिथ्याभूत
स्य ज्ञानमात्रनिवर्त्यत्वं युक्तञ्चेत्यन्वयः । (मनसोपीति) सहकारिविशेष
गतासहाय सोहमितिज्ञानस्य मनसाऽसंभवादित्यर्थः । तर्हि तत्सहकृतमनस
एव करणत्वं कुतो नस्यादित्यत आह (मनसश्चेति) यद्यपि शब्दस्यापि तादृ
गसाक्षात्कारकरणत्वमसिद्धं, तथापि तादृशज्ञानकरणत्वे नविवादः,
अतस्तज्जन्यज्ञानस्यसाक्षात्त्वमात्रंकल्पनीयं, मनसस्तु तादृशज्ञानकरण
त्वं तज्जन्यज्ञानस्यसाक्षात्त्वंच कल्प्यम् , अतोलाघवाच्छब्दस्यैव साक्षा-
त्कारकरणत्वकल्पनं युक्तमितिभावः । ( तथात्वइति ) मनसस्तादृ-
शसाक्षात्कारकरणत्वस्य दृष्टचरत्वे श्रवणादिसापेक्षापरोक्षज्ञाने प्यन्यत्र

चिन्तिकाप्रपञ्चानिरासकबोधनेतापर्यात् । अतएव “ अप्राप्यमनसासह ” इत्यादेरनधिगतमनोविषयत्वव्यवस्थापनानुपपत्तिः । नच-मानसप्रत्यक्षमिति, आत्मनः स्वप्रकाशत्वात्, सुखादेस्तु साक्षिवेद्यत्वात्, भावनासहकृतमनोजन्यसाक्षात्कारस्यापि पथिकपरिभावितप्रियतमासाक्षात्कारवत् भ्रान्तित्वात्, भ्रान्तिरूपसाक्षात्कारस्यापि साक्षिरूपत्वेनैव मानसत्वाभावात्, अनुमानादेस्तु नापरोक्ष्यनिर्वहणशीलत्वात् । अतो वाक्यपरिशेषे तत्रापि भेदगर्भाणां वाक्यानां भेदभ्रमनिवर्तकत्वायोगात् अद्वैतवाक्यान्येवाविद्यानिवर्तकापरोक्षज्ञानं जनयन्तीति । किंच–प्रत्यक्षस्य भेदभ्रमस्य परोक्षादैन्द्रियिकप्रत्यक्षाद्वा न परिभवो युक्तः, न्यूनत्वात् समत्वाच्च । शास्त्रमूलं तु प्रत्यक्षं साक्षात्कारत्वाविशेषेऽपि निर्दोषहेतुकत्वाद्बाधक्षमम् । तथोक्तं “न्यूनत्वाच्च समत्वाच्च परोक्षं नाक्षजक्षमम् । निर्दोषहेतुजन्यत्वात् प्रत्यक्षं शास्त्रजं क्षमम्” इति । प्रत्यक्षभेदभ्रमनिवर्तनइतिशेषः । साक्षात्कारस्य चाविद्यानिवर्तकत्वं तस्य च शब्दकरणत्वं शब्दादेवसिध्यति, “ निचाय्य तं मृत्युमुखात् प्रमुच्यते ” ‘ क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे” इत्या

---

त्ममस्य मनसएव करणत्वेन शब्दस्य करणत्वाभावाच्छ्रवणादिनिरपेक्षपरोक्षज्ञाने शब्दस्य करणत्वं ग्राह्यं, तथाच श्रवणादिवैयर्थ्यमितिभावः । ( अतएवेति ) मनोग्राह्यत्वाभावे श्रुतिः प्रमाणमित्यर्थादुक्तं भवति । ( भावनेति ) भावनासहकृतमनोजन्यत्वेन पराभिमतस्येत्यर्थः ( पथिकेति ) प्रोषितचिन्तितायाः प्रियतमायाः साक्षात्कारवदित्यर्थः । एवं परोक्षज्ञानस्य निवर्तकत्वादर्शनादपरोक्षपरिशेषः प्रमाणान्तराणामप्रवृत्तेर्वाक्यपरिशेषश्चोक्तः, इदानीं परोक्षस्यापरोक्षस्य च निवर्तकत्वासम्भवादपरोक्षत्वं शब्दजन्यत्वं च परिशेषयति ( किंचेति ) ( न्यूनत्वाच्चेति ) परोक्षभ्रमस्यापरोक्षज्ञाननिवर्त्यत्वदर्शनात् सोऽन्यूनबलत्वादित्यर्थः । न्यूनत्वात् परोक्षं न क्षमम्, समत्वादक्षजं च न क्षममित्यर्थः । नन्वेवं परिशेषात् साक्षात्त्वशब्दकरणत्वयोः सिद्धिः, किन्तु श्रुत्यापीत्याह ( साक्षात्कारस्य चेति ) ( निचाय्येति ) चायृधातुर्दर्श

दिभि रपरोक्षज्ञानस्य भनिद्यानिवर्तकत्वसिद्धेः । " तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमार." "वेदान्तविज्ञानसुनिश्चितार्था." "स्वाध्यायश्चक्षुस्तदेकमस्य योगोद्वितीय मभिवीक्षणाय । अध्ययनमननन यनोस्यमृष्टा नमामचक्षुरभिवीक्षनेतं" "पितृदेवमनुष्याणां वेदश्चक्षुस्सनातन"मित्यादेस्तस्य शब्दकारणकत्वसिद्धिः । प्रयोगश्च–विगीतंज्ञान साक्षात्कारि - तत्वमस्यादिवाक्यजन्यज्ञानत्वात्, तत्स्वरूपगोचरश्रावणज्ञानवत् । नच तत् तदजन्यं - प्रत्यक्षेन्द्रियस्य कारणत्वस्वीकारात् । तत्रैवप्रतिज्ञाया मपरोक्षज्ञानविषयत्वात्सुखादिज्ञानवदितिवाप्रयोगः । तत्वमस्यादिवाक्यना स्वप्रतिपाद्यगोचरसाक्षात्कारजनकम् — स्वप्रकाशार्थोपदेशरूपत्वात्, स्वतोपरोक्षार्थविषयत्वाद्वा, संवित्स्वप्रकाशा दशमस्त्वमसीत्यादिवाक्यवत् । अपरोक्षत्व तत्वमस्यादिवाक्यजन्यज्ञानवृत्ति - अपरोक्षज्ञाननिष्ठात्यन्ताभावाप्रतियोगित्वात्, ज्ञानत्ववदिति । नच अत्र परोक्षत्व तत्वमस्यादिवाक्यजन्यज्ञानवृत्ति - परोक्षनिष्ठात्यन्ताभावाप्रतियोगित्वात्, ज्ञानत्ववदिति सत्प्रतिपक्षसाधनता, सिद्धसाधनात् । तेषा मेवहि धानयाना मसंभावनाविपरीतसभावनाप्रतिबद्धचेतसिपुरुषे परोक्षज्ञान

---

नार्थः । ( तस्माइति ) करिष्यमाणोपदेशएव तत्र दर्शयतिना उक्तइति भावः । ( वेदान्तेति ) सूपसर्ग प्रत्यक्षरूपइति भावः । ( नमांसेति ) मांसचक्षुर्निषेधाच्छ्रुतिचक्षुरनुमितमिति भावः । ( विगीतमिति ) नन्वयमसिद्धोहेतुः, वाक्यार्थज्ञाने वाक्यस्यातीतादिरूपत्वेनाजनकत्वात्, तज्ज्ञानस्यैव जनकत्वात, प्रयोज्यत्वमात्रविवक्षायां तल्लिङ्गिकायां तत्पक्षिकायांच व्यभिचार इतिचेन्न, अनुमित्याद्यन्यत्वेन विशेषणात् । यद्वा - तत्वमसिवाक्यमत्युच्चारणाभिन्नमेव, तथाच - यस्य तत्वमसि वाक्यस्य नलिङ्गत्वं नापि पक्षत्वं नापिस्मृतिं, तच्छ्रवणजन्यं वाक्यार्थज्ञानं पक्षः, तद्वाक्यप्रयोज्यज्ञानत्वं हेतुरिति । तत्वमस्यादिवाक्यजन्य-किञ्चिज्ज्ञानवृत्तित्वसाधनेदोषमाह, ( सिद्धसाधनादिति ) तत्वमस्या

जनकत्वमिष्यते । पूर्वोक्तश्रुतिविरुद्धतया कालात्ययापदेशाच्च । नचवाच्यं-
अग्निहोत्रादि वाक्यजन्य ज्ञानेष्वप्येवं प्रयोक्तुं शक्य मिथ्याभाससमान
योगक्षेमतेति, तत्र विपक्षबाधविरहात् । नहि तत्र प्रामाण्यस्यानुपपत्तिः,
अनुमानादिवदुपपत्तेः । नाप्यनुष्ठानस्य, परोक्षनिश्चयादपितदु-
पपत्तेः । नापि फलस्य । ततएव तत्सिद्धेः । नापिच फलकामना
या, फलसम्बन्धनिश्चयादेव तस्याअप्युपपत्तेः । अतएव पुरुषप्रवृ-
त्तिरपि सङ्गच्छते । इहतु प्रागुक्तार्थानुपपत्तिरेव विपक्षबाधिकास्यात् ।
अतोनाभासतुल्यतेति ॥ एवं पूर्वेष्वपि प्रयोगेष्वाभासतुल्यतोद्धारो द्र-
ष्टव्यः । अतोविपक्षबाधकस्यैव प्रतिबन्धरहस्यत्वात् उक्तार्थे महाविद्याजात-
मथ यथायोगं प्रयोक्तव्याः । स्वपरपक्षसाधारण्यंहि महाविद्यानां स्वभा-
वः, तत्रानुकूलतर्कसदसद्भावाभ्यामेकत्रार्थसिद्धि रितरत्रार्थासिद्धिरितिनि
र्णयः । ननु तर्कपराहताऽमीहेतवः, शब्दस्यप्रत्यक्षत्वप्रसङ्गादिनिचेत्;
न,अप्रसङ्गात् । योगिमनसो बाह्यविषयप्रत्यक्षज्ञानजनकत्वेपि बाह्यप्रत्यक्षत्वंनहि
मानसवदुपपत्तेः । अथ चक्षुरादिपञ्चकान्यतमत्वं, योगिमनोन्यत्वेसति बाह्य

---

दिवाक्यजन्यशाब्दज्ञानस्यापि प्रत्यक्षत्वसाधने दोषमाह (पूर्वोक्तेति) (नचेति)
अपरोक्षत्वसाधकहेतोः अग्निहोत्रादिवाक्यजन्यज्ञानवृत्तौ यदि प्रयोक्तुंशक्यमित्यर्थः ।(फ-
लकामनायाइति) अनेनेदंफलंमेभूयादितिकामनायाइत्यर्थः । (फलेति)
फलसंबंधः - फलजननयोग्यता । (अतएवेति) पूर्वमनुष्ठानमित्य-
ग्निहोत्रादिक्रियाविषयिणी, प्रवृत्तिस्तु तज्जनककृतिरितिभेदः । (इह
त्विति) विपक्षेमिथ्यात्वान्यथानुपपत्तिरित्यर्थः । प्रतिबन्धोव्याप्तिः ।
ननु महाविद्यानां स्वपरपक्षसाधारण्यात् स्वेनैव सत्प्रतिपक्षितत्वात्
कथं ततस्साध्यसिद्धिरित्यत्राह (स्वपरेति) यद्यपि स्वपरपक्षसाधार-
ण्यं महाविद्यानां स्वभावः, तथाप्यनुकूलतर्कतदभावाभ्यां साध्यसि-
द्धितदभावावित्यर्थः । (योगीति) बाह्यविषयक बाह्यविशेषणक

विषया परोक्ष प्रमितिकारणत्वं वा बाह्य प्रत्यक्षांतर्भावे प्रयोजकमिष्येत, इष्टापितर्हि स्वतोपरोक्षार्थब्रह्मात्मविषयशब्दान्यत्वेस त्यपरोक्षप्रमितिकारणत्वं प्रत्यक्षांतर्भावप्रयोजकमितिसम स्समाधिः । किञ्च प्रत्यक्षांतर्भावइति इन्द्रियांतर्भावोवा, साक्षात्कारजनकवाक्यांतर्भावोवा विवक्षितःस्यात् । पूर्वत्र मनसोपि बाह्यानंतर्भावइतिवदुपलंभविरोधात् अशक्यः । उत्तरत्राविष्टप्रसंगता, ऐकराश्येसिद्धेस त्यवांतरभेदाश्रयणाविरोधात्। तदेवंतु कथमितिचेत् ,न,दशमस्त्वमसीत्यादौ तद्दर्शनस्यसमर्थितत्वात्। वाक्यस्यैवापरोक्षधीजनकत्वे मननिदिध्यासनाविध्यानर्थक्यं, श्रुतवेदांतानां संसारानुवृत्तिदर्शनविरोधश्चेतिचेत्,न,प्रागुक्तप्रतिबन्धनिरसनद्वारेण तयो.श्रवणं प्रतिफलोदयकार्यंगतयाविधानोपपत्तेः, संसारित्वोपलब्धेश्च प्रतिबन्धकत्वपुरुषविषयत्वात् । अतो बाधकापेत सानुग्राहक श्रुत्यादिसिद्धं तत्वमस्यादेः साक्षात्कारजनकत्वमिति ॥

अत्रब्रूमः — यत्तावदुक्तं केनुचिद्वाक्ये स्वपरोक्षधीहेतुत्व दृश्यतइति, तन्नरविषाणांकुरप्रसाधने खरविषाणांकुरनिदर्शन मिति मन्यामहे । तथाहि - संवित्स्वप्रकाशेत्यत्रनान स्सामान्यतः स्वपरसमवेत त्रैकालिकसर्वसंवित्स्वप्रकाशत्वंवास्यार्थः।तादात्विकीतु तज्जन्या संवि देका तदानीं स्वप्रकाशा, तत्र न सर्वसंविदां स्वप्रकाशत्वमिदानीमपरोक्षं, यतो

---

एवं, ज्ञानामस्यासत्तिकत्वेसतीतिया विशेषणीयम् । ननु कथमित्थं, ' निर्विशेषं न सामान्य ' मिति न्यायेन चक्षुरादिविशेषानन्तर्भावे प्रत्यक्षजनकसामान्यान्तर्भावस्यापिबाधा दित्याशंक्य सामान्यतः प्रत्यक्षान्तर्भावेसति चक्षुराद्यवान्तरभेदाश्रयणव च्छब्दरूपावान्तरभेदाश्रयणमपि संभवतीत्याशयेनाह ( ऐकराश्यइति ) ( तदेवमिति ) ऐकराश्यमित्यर्थः । तद्दर्शनस्य - साक्षात्कारजनकत्व दर्शनस्येत्यर्थः । ( यत्तावदिति ) नवमरूढत्व लाभार्थं मंकुरशब्दप्रयोगः । ( यतइति ) अपरोक्षार्थविषयत्वमयुक्तत्वाभ्युपगमात् ज्ञानापरोक्ष्यस्येतिभावः । नच सर्व संविदां कदाचि दापरोक्ष्या त्तद्विषयापरोक्ष्यंस्यादितिवाच्यं,

वाक्यस्य तदापरोक्ष्यहेतुता स्यात् । नच सर्वसंविदैक्य, तस्यदू- षयिष्यमाणत्वात् । तदैक्येपि तत्तदुपहिताकारेण परोक्षापरोक्षविभाग स्य दुरपह्नवत्वात् । वाक्यजयसंविदंशरूपापरोक्ष्येतावद्वाक्यमेव कारण विषयप्रकाशांशकारणव्यतिरेकेण स्वप्रकाशांशे कारणान्त रानुपलम्भादिति चेत , तर्हि सिद्ध मनुमानादे र्वाक्यान्तराणामप्यपरोक्ष धीजनकत्व, तत्तज्जन्यधियामपि स्वप्रकाशांशेपि तत्तत्कारणकत्वात् । सत्य, तथापि- सविस्वप्रकाशेत्यादिवाक्येषु विषयप्रकाशांश स्वप्रकाशांश श्चैकरूपेणेति विशेषइतिचेन्न, सामान्यविशेषविषयतया तद्भेदस्यदर्शितत्वात् ।

---

च्यम् । वह्न्यनुमितेर प्यापरोक्ष्यापातात । ( नचेति ) वस्तुतो ज्ञान स्य स्वप्रकाशत्वेपि तत्स्वप्रकाशत्वस्य तेन ज्ञानेनाग्राह्यत्वा न्न तदापरोक्ष्य मितिभाव । ( तदैक्येपीति ) उपहितसंविदा कासाञ्चि दन्यकाली नत्वात् कासाञ्चिद्व्यधिकरणत्वाच्च पारोक्ष्यमितिभाव । ननु - संवि त्स्वप्रकाशेतिवाक्यजन्यज्ञानस्य स्वप्रकाशत्वेनापरोक्षत्वा तज्जनकत्वेना परोक्षहेतुत्व सिद्धमेव, नच - प्रत्यक्षांशे जनकत्वमेव साध्यम् अन्य था सिद्धसाधनात् , वाक्यच विषयांशएव हेतु -नस्वजन्यज्ञानांशेपि,अत प्रत्यक्षजनकत्व नास्त्येवेतिवाच्य, तदंशेपि वाक्यातिरिक्तकारणादर्शनेन तस्यैव कारणत्वा दिति शङ्कते ( वाक्येति ) ( तर्हीति ) तथाच सिद्धसाधन हेतुविशेषण वैयर्थ्य चेति भाव । ननु विषयप्रका शांशाभिन्नप्रत्यक्षांशजनकत्व साध्य, अनुमानादिषु वह्निमानितिजानामी त्यत्र वह्निमानित्यंशोविषयांश जानामीत्यंश स्वप्रकाशांश संवित्स्व प्रकाशेत्यत्रतु तज्जन्यज्ञानस्यापि संवित्त्वेन विषयान्तर्भावात् तत्प्रका शेनैव स्वव्यवहारोपपत्तौ जानामीत्यंशान्तरस्यकल्पकाभावात् स्वप्रत्यक्षरूप स्वांशप्रकाशांशो विषयप्रकाशांश श्चाभिन्नएवे त्यदोष इति शङ्कते ( सत्यमिति ) ( नेति ) संविदि त्यतीतानागतसर्वपरसाधारण संविन्मा त्रगोचरविषयप्रकाशांशमात्रेण जानामीति तज्जनन्यस्तिमात्रगोचर त

शुक्तौ रजतत्वस्यैवा विरोधापादकत्वं मिथ्यात्व मिह स्मर्त्तुमर्हसि ॥*॥ सत्य विरोधाच्छुक्तित्व बाधकत्वेनकथ्यते । मिथ्याभूतंचरजत बाध्यत्वेना भिधीयते॥*॥तेन मिथ्यैतादितिरचन तत्राविरोधापादक न भवति, प्र सञ्जनीयच काचिदस्मदिष्ट, आप्तोपदेशादिभि शुक्तित्वप्रकाशेऽपि दु- ष्टेन्द्रियादिना कस्यचित् कचिद्रजतावभासानुवृत्ते , अन्यथा भवता बाधि त नुवृत्तेर्दृष्टान्तस्याप्यभावप्रसगात् । तथा प्रत्यक्षसिद्धेऽपि शुक्तेस्त्वे भ्रान्तविप्रलम्भकवाक्यादिभिरपि रजतधीरुदेत्येव, साच परोक्षैव, शी- घ्रन्तु बाध्यमानतया केषाचि त्तत्र तदनु त्पत्तिभ्रम । किंच - यदिप्र त्यक्षेविषये परोक्षप्रकाशो व्याहत । तदा पर्वतोवह्निमानित्यादिषुविरो

---

सत्यत्वच मिथ्यात्वस्य शुक्तिरजतयो रिवाविरोधापादकत्वाद्वाच्यम् , तच्च न सभवति, सत्यमिथ्यार्थयोर्विरुद्धत्वात् , अन्यथा बाध्यबाधकभा वानुपपत्ते., तस्मात् परोक्षतदभावयोरविरोधासिद्धे: परोक्षा भावासभ वा त्र प्रसञ्जकस्यानिष्टत्वमित्याह ( शुक्तावित्यादिना तत्राविरोधापा दकत्वभवतीत्यन्तेन ) स्मर्तुमर्हसी त्यनन्तरन्त त्रसभवतीतिशेष. । ( सत्यमिति ) सत्य शुक्तित्वमित्यन्वयः । बाध्यत्वेनाभिधीयत इत्यत्र विरोधादित्यनुषञ्जनीयम् । ( अविरोधापादक नसभवतीति ) परोक्षतद्भा वयोरिति शेष । परोक्षज्ञानस्यापरोक्षभ्रमानिवर्तकत्वेपि शाब्दज्ञानस चिवेन्द्रियेणापरोक्षज्ञानादेव भ्रमनिवृत्तिस्स्यादित्यत्राह ( दुष्टेन्द्रियेति ) दोषमाहात्म्या दाप्तोपदेशे सत्यपि क्वचि त्र तत्वापरोक्ष्यमुत्पद्यते, किन्तु भ्रमएवेत्यर्थ । एव विरुद्धयोस्सन्निपाते शुक्तित्वज्ञाने सत्यपि र जतभ्रमस्स्यादि त्यापादनार्थमभिप्रेत्य तत्र दोष उक्त:, इदानीन्तु अप रोक्षेपि परोक्षप्रकाशोस्तिचेत् शुक्तित्वेनापरोक्षेपि रजतत्वेन परो क्षस्यादित्यापादनार्थमभिप्रेत्य तत्र दोषमाह ( तथेति ) अयोग्यताज्ञान प्रतिबन्धकत्वेतिभाव. । यद्वा - अप्रामाण्यशङ्कादशाविवक्षिता । ( उद्दे श्येवेति ) तत्रानुभवएव मानमिति भाव. । ( विशेषतइति ) प्रत्य क्षयोग्यार्थं विशेषतोदृष्ट, तदयोग्यार्थं सामान्यतोदृष्टमिति विभागा

परोक्षानुमानेषु तथाविधार्थगोचरत्वास्येषु च परोक्षप्रकाशो न स्यात् । योग्यतामात्रं तु तत्र, न तु तदानीं प्रत्यक्षत्वेनेति चेन्न । यस्य कस्यचित् आप्तस्य योगीश्वरादेः स्वदर्शनात् । तथापि नानुमानस्तथेति चेत्; तर्हि तत्रापि दशमत्वादेः वाक्यश्रवणात्पूर्वं मदर्शनानन्तरमस्य तत्साक्षात्कारसंभवः । यत्पुनः स्वस्यैव द्रष्टुं योग्यतया ऽनन्तरदर्शनाद्वा तत्र तत्संभव इष्येत, तर्हि सिद्धं अनुमानादावपि तदुभयसंभवात् तथात्वं । यदा च अयं घटः इति गम्यमानप्रत्ययो कश्चिद् दयं घटः इति स्यात्, तदा तस्यापि प्रत्यक्षार्थविषयत्वाविशेषात् साक्षात्कारजनकत्वप्रसंगः । इष्यत एवेदमपीति चेन्न, स्वतोऽपरोक्षार्थविषयत्वादिति हेतुविशेषणप्रयोजनस्य तदनिष्टं, इष्यताम्, तथापि ज्योतिष्टोमादिवाक्यार्थस्यापि योगिप्रभृतीनां प्रत्यक्षत्वयोग्यत्वाविशेषात् तान्प्रति केनचिदविदितमाहात्म्येन तत्प्रयोगे ततः साक्षात्कारसंभवप्रसंगात् । तथा च सर्वमपि वाक्यं कस्यचित्साक्षात्कारकारणमिति स्थिते केषांचिदेवेति व्यवस्थाभंगः । अस्त्वेवमपि

---

भिप्रायेणोक्तम् । ( तथाविधेति ) अग्न्यादिवत्प्रत्यक्षार्थगोचरेष्वित्यर्थः । तदानीं प्रत्यक्ष परोक्ष प्रकाशो व्याहतः, अग्न्यादिर्न तथा, ब्रह्म तु तथैव, नित्यापरोक्षत्वादिति शंकते ( योग्यतेति ) आपरोक्ष तदानीमपरकानां योगिनामीश्वरस्य हिरण्यगर्भादेश्च प्रत्यक्षइत्याह ( यस्यकस्यचिदिति ) तं प्रत्यपरोक्षे तस्य परोक्षं व्याहतमिति शंकते ( तथापीति ) ( तर्हीति ) तत्र परोक्षज्ञानस्य व्याघाताभावाच्च साक्षात्कारसमर्थनमित्यर्थः. ( यत्पुनरिति ) यदि प्रत्यक्षे परोक्षव्याघात इत्येवोच्यते, प्रत्यक्षइति च प्रत्यक्षयोग्यत्व, व्याहतत्वेनाभिमत परोक्षज्ञानानन्तरमपरोक्ष इति वा विवक्षितं, तथा च दशमत्वस्य प्रत्यक्षयोग्यत्वा दनन्तरं प्रत्यक्षदर्शनाद्वा परोक्षव्याघातात् अपरोक्षसंभव इष्यतइत्यर्थः ।

ननु – तदा प्रत्यक्षे परोक्षप्रकाशस्यैव व्याघातः, यदा च दशमत्वं प्रत्यक्षं तदा तत्रापरोक्षज्ञानसमर्थनमिति स एव दृष्टान्त इत्यत्राह ( यदाचेति )

साधयिष्याम । यत्तु - "तरतिशोक मात्मवि"दित्यादिभि र्ज्ञानमात्रनिवर्त्यत्व सिद्धमिति, एतदपि वेदनज्ञानादिशब्दाना उपासनाख्यविशेषपर्यवसानस्य प्रागेवदर्शितत्वान्निरस्त । यदाहु ॥*॥ वेदन ध्यानविश्रान्तध्या न श्रान्त ध्रुवस्मृतौ । साचदर्शनसम्प्येतिदृष्टिर्भक्तिव मृत्तीति ॥ मिथ्याभूतस्य ज्ञानमात्रनिवर्त्यत्व युक्तमित्येतच्च मिथ्याभूततया भवदभिमतस्य तिमिरादिदोषस्य प्रतिभटादेश्च भेषजशस्त्रादिनिवर्त्यत्वोदाहरणेन प्रागेव दत्तोत्तर । अस्तुच मिथ्यात्वे धीबाध्यत्वे युक्ति, नचात्रमिथ्यात्व ॥ * ॥ दृश्यत्वाद्यदि मिथ्यात्व प्रपचस्याभिधीयते । ब्रह्मणोपि चमिथ्यात्व ततएवाभिधास्यते ॥ ब्रह्मणोयदि दृश्यत्व व्यावहारिकमुच्यते । प्रपचस्यापि दृश्यत्व तात्त्विक किं त्वयेष्यते ॥ * ॥ अपिच समारमिथ्यात्वेपि किंनिवृत्तिशब्देन प्रतिभासमानमिथ्यार्थ प्रध्वसनमभिप्रेत्य तदर्थमपरोक्षधीगोचरण, उततद्विषयज्ञानप्रध्वसन, आहोस्वित्तत्कारणोच्छेद, अथवा तथाविधज्ञानान्तरानुत्पाद, उततद्विपरीतविषयावगाहरूपविषयापहार, यद्वा तद्विषयसत्यताध्यवसायपराविरुय, अथान्यदेव किंचिदसाव्यवहारिकमिति ॥ नाद्य क्वचिदपि मिथ्यार्थस्य प्रध्वसाभावात, "प्रध्वसोहि स्वरूपस्य प्रच्युति प्रतिपाद्यते,

---

धयिष्याम इत्यर्थ । सत्यत्वसाधना न्मिथ्यात्वस्यासिद्धिः सिद्धा, सत्यत्वेवा मिथ्यात्वेवा प्रमाणबला दीश्वरसकल्पनिवर्त्यत्वस्यावश्यकत्वा दन्यथा सिद्धिरसिद्धा ।(तरतिशोकमित्यादि)ननु - उपासनस्यापि ज्ञानत्वात् कथ ज्ञानमात्रनिवर्त्यत्वस्य निरासइतिचेत् , न, ध्यानादिभिस्तस्यैव परेण ज्ञानत्वाङ्गीकारात तन्निवर्त्यत्वस्यैव तदिष्टत्वा त्तस्यैवेह निरस्तताभिधानेन दोषाभावात । किंच, उपासनादिनानिवृत्तौ मुमुक्षादिसहकारिणोपेक्षितत्वात् न ज्ञानमात्रनिवर्त्यत्वम् , तन्मतेतु उपासनादि सर्वं ज्ञानार्थ मपेक्ष्यते, ज्ञानेतु बन्धनिवृत्तौ न किंचि दपेक्ष्यतइति । युक्ति युक्तता । ( व्यावहारिकमिति ) तथाच हेत्वसिद्धे र्नमिथ्यात्वसाधनमितिभाव. । किं मिथ्यार्थोस्ति, उत न, द्वितीय आह, ( प्रध्वस इति ) विद्यमानतामात्र सत्यत्व, नातिरिक्त अनिरूपणादितिभाव. ।

स्वरूपसत्यताभावे कथं प्रच्युतिरुच्यते ॥ सत्यपि तस्मिंस्तेन तदुच्छेदायोगात् । अन्यथा बाधकज्ञानात्पूर्वं सुषुप्ते द्रष्टरि पुरुषे शुक्तिरजताद्यारोपितप्रसङ्गात् । संविदधीनसत्ताकस्य तस्य तावन्मात्रवृत्तेरहि निवृत्तिः । आहुश्च अरोपस्य निवृत्तिरस्मा दारोपस्यापि संक्षयः । तस्य स्वरूपशून्यस्य ज्ञानिवृत्तिरिति कथ्यते ॥ न द्वितीयः - तस्य बाधकज्ञानाभावेपि बाधकज्ञानवदेव स्वरसवाहिविनाशहेतुमत्त्वा देवाशुतरविनाशित्वात् । अन्यथा नुदितबाधकज्ञानस्य भ्रान्तस्य सुषुप्त्याद्यभावप्रसङ्गात् । तथाहुः न भ्रान्तिर्बाधकज्ञानात् नियमेन निवर्तते । नस्याद्धि भ्रान्तचित्तस्य सुषुप्तौ भ्रान्तिसंक्षय इति ॥ यद्यपि — उत्तरज्ञानमात्रमपि संस्कारादिरपूर्वज्ञाननिवर्तकमिष्यते — तथापि, यत्किञ्चिदविरुद्धविषयात् परोक्षज्ञानादपि पूर्वज्ञाननिवृत्त्युपपत्तौ विरुद्धविषयप्रत्यक्षज्ञानाभिधानं निष्फलं । नच तृतीयः भ्रान्तिज्ञानकारणोच्छेदे यथावस्थितप्रत्यक्षज्ञानानुदयात् । नह्यङ्गुल्यवष्टम्भतिमिरादिदोषेष्वनुवर्तमानेषु चन्द्रैकत्वसाक्षात्कारसम्भवः । सम्भवे नापि तदुच्छेदेन । प्रत्यक्षानुवर्त्यर्थं तदुच्छेद इति चेत्, न, तत्सामग्र्यनुवृत्तिमन्तरेण तदुच्छेदेपि तदसिद्धेः, तस्यानानुवर्तमानाया तदवस्थानेपि विरोधाभावात् । स्वाभाविकप्र

---

आह । (सत्यपीति) तेन - ज्ञानेनेत्यर्थः । (अन्यथेति) नचेष्टापत्तिः । सुषुप्तिकाले मुद्गरादिना शुक्तिनिवृत्तौ यद्रजतस्यापि निवृत्तिः, तदा ज्ञानानिवर्त्यत्वभङ्गात्, अनिवृत्तौ निरधिष्ठानाध्यासप्रसङ्गात् । दूषणान्तरमाह (संविदिति) भ्रान्तिज्ञानेत्यादिः शेषस्य तत्त्वज्ञानप्रतिबन्धकत्वादिति भावः । (सम्भवेति) तत्त्वज्ञानोत्पत्त्यर्थं हि भ्रान्तिसामग्र्युच्छेदः कल्प्यः, तस्याः सत्यामपि तत्त्वज्ञानोत्पत्तौ किन्तदुच्छेदकल्पनेनेत्यर्थः । *द्वितीयं प्रत्यक्षज्ञानेऽस्त्वत आह,* तत्सामग्र्यनुवर्तते नवा, द्वितीये दोषमाह (तत्सामग्रीति) साक्षात्कारसामग्र्यभावभ्रमसामग्र्युच्छेदेपि तत्साक्षात्कारानुपपत्तेरित्यर्थः । आद्ये दोषमाह (तस्या इति) तत्त्वसाक्षात्कारसामग्रीसत्त्वे भ्रमसामग्रीसत्त्वेपि बाधविरहेऽप्यपरोक्षवत् द्विती

त्यक्षप्रतिबन्धकतया तदुच्छेदकल्पनामितिचेत् । किमत्र स्वाभाविकत्वं, किंसामग्र्यधीनत्वाभावस्वरसवाहित्वं, उतनित्यस्वाभाविकत्वम् । आद्येप्रागपि कथ तदवस्थानेप्रत्यक्षोदयः अन्योन्याश्रयणात् । द्वितीयेपि नित्य स्वाभाविकप्रत्यक्षस्यच किन्नामप्रतिबन्धकम् । अयमत्रसंग्रहश्लोकः ॥ भ्रान्तिकारणसद्भावेप्रत्यक्षस्यह्यसंभवे । सम्भवेनैष्फल्येनास्या स्तदुच्छेदस्य कल्पना ॥ स्वानुवृत्त्यर्थमुच्छेद स्सामग्र्यधीनानुवर्त्तनात् । प्रतिबन्धनिवृत्त्यर्थ मुच्छेदेप्रथमं कथ ॥ प्रत्यक्षकारणोच्छेदेतदुच्छेदस्ततोपिचेत् । अन्योन्याश्रयणंतुस्या त्प्रतिबन्धोनचात्मनीति ॥ नापिचतुर्थ , प्रागभावस्यासाध्यत्वात् , तदनुवर्त्तनस्याप्यंतत स्तत्प्रतियोगिकारणोच्छेदको

---

पादे रप्युत्पत्तिसंभवादित्यर्थ (नित्येति) नित्यत्वात्मकस्वाभाविकत्वमित्यर्थ । किं प्रतिबन्धकनिवर्तकं नित्यज्ञानमेव, उत स्वरसवाहि । आद्ये दोषमाह (अन्योन्येति) (द्वितीये दोषमाह (नित्येति) नित्ये प्रतिबन्धकस्याभावात् , तन्निवर्तकत्वत्रस्वाभाविकप्रत्यक्षस्य कल्प्य मित्यर्थः। ननु - भ्रान्ते पुनरप्यनुत्पादार्थ तत्सामग्र्युच्छेदकत्वम् प्राथमिकप्रत्यक्षस्य कल्पनीयमितिचेत् , न , सामग्र्या मिथ्यात्वे तस्या अपि स्वरूपतस्सत्त्वाभावेन प्रच्युत्यसंभवात्तस्या अपि अनिवृत्तिस्तद्भ्रान्तिकारणनिवृत्तिरित्येव वाच्यम् तत्राप्येवमित्यनवस्था, सत्यत्वे नापरोक्षज्ञाननिवर्त्यत्व तवेष्टमितिभावः । स्वाभाविक प्रत्यक्ष प्रतिबन्धकतया तदुच्छेदकल्पन मित्यत्र प्रागुक्तविकल्पे प्रथमशिरसि दूषणमाह । (प्रतिबन्धेति) द्वितीयेपि पूर्वोक्तविकल्पमभिप्रेत्य प्रथमशिरसि दोषमाह (प्रत्यक्षमिति) प्रत्यक्ष भ्रान्तिकारणोच्छेदे सत्येव वाच्यम् , तस्य त्वया प्रत्यक्षप्रतिबन्धकत्वोक्ते, तदुच्छेदस्तु यदि प्रत्यक्षेण स्यात् , तदान्योन्याश्रयइत्यर्थः । द्वितीय आह (प्रतिबन्ध इति) आत्मरूपे अपरोक्षे न प्रतिबन्धकं नित्यत्वादित्यर्थ । क्वचित्तु न द्वितीयइत्यत प्रागेवान्योन्याश्रयणादितिपाठ , सतु सुगमः, सम्प्रदोपि तदनुसारेण योज्य (तदनुवर्तनस्येति) प्रागभावपरिपालनंहि सत्यां सामग्र्या कार्यानुत्पादयोगात् प्रतियोगिकारण विघटनेनैव वाच्यम् , तच्च नि

दिनिक्षेपात्, तस्य च निरस्तत्वात् ॥ न पञ्चमषष्ठौ, परोक्षा दपि तत्सिद्धेः, प्रत्यक्षमपि हि द्विचन्द्रादिज्ञानमनुवर्तमानं प रोक्षेण चन्द्रैकत्वानुमानादिना बाध्यते, तावतैव चन्द्रद्वित्वाध्यवसा यशैथिल्यं जायते । अन्यथा देहात्मभ्रमस्यात्मानुमानेनागमेन वा देहातिरिक्तात्मविसम्भो न स्यात् । परोक्षबाधे भ्रमोऽनुवर्तत इति चेत्, न तुल्यमेतदित्युक्तत्वात् ॥ सजातीयपरोक्षेऽपि बाधकारणस भावात् । अपूर्व्यार्थैर्भवद्भाति स्यपस्भवत्येनुभे ॥ नापि सप्तम, तस्य नाध्यस्तात्किर्त्त्वे तदर्थोपायोपदेशायोगात्, अन्वयव्यतिरे काभ्यां चरमेन परोक्षपक्षपातविरहाच्च । एवं सामान्येन परोक्षज्ञा नानपेक्षायां युक्त स्तत्कारणविशेषचिन्तेत्यनुत्थानमेव शब्दज न्यप्रत्यक्षवादस्येत्यभिप्रेत्य भाष्यकारैरिह न सरभ कृत "स्यया सामग्र्या ज्ञानानुपपत्त्यनुपपत्ते" रित्यादिना । "द्रष्टव्य" इत्यादेर्दर्शनसमानाका रविधिपरत्वोक्तेश्चेद मपि दूषितमस्त । समन्वयाधिकरण पूर्वपक्षेतु परोक्षैव दूषयिष्यति "न च शब्दएव प्रत्यक्षं ज्ञानं जनयतीति वक्तु युक्तं, तस्यानिन्द्रियत्वा"दित्यादिना । अस्तु वा क्वचिदपरोक्षपरि शेष । तथापि — प्रत्यक् पराङ्मुखत्वादि लक्षणविरुद्धव्याप्तयेन्द्रिय परित्यागे तुल्यन्यायतया वाक्यस्यापि परित्यागप्रसङ्ग ।

---

रस्तमित्यर्थ । भ्रमानुवृत्तिरेव सत्यताध्यवसायशैथिल्य तच्च परो क्षज्ञानान्नेति शङ्कते ( परोक्षेति ) ( उक्तत्वादिति ) प्रत्यक्षसिद्धेऽपि ग्रुक्तेस्त्वे विमलभक्वाक्या द्रजतधी रुदेत्येवे त्युक्तत्वादित्यर्थ । ( अपरोक्षेपीति) भ्रान्तिरपीत्यन्वय । ( एवदिति )अपरोक्षज्ञानद्वारा ण तदर्थस्य श्रवणाद्युपायस्योपदेशायोगात् । प्रत्यक्षपरिशेषमभ्युपगम्य वा क्यपरिशेष दूषयति ( अस्तु वेति ) ( प्रत्यगिति ) आदिशब्देन मन स्यागहेतु स्तोदमित्यस्मिन्नर्थे ऽ स्वातन्त्र्य, मनुमानपरित्यागहेतुरप रोक्ष्यविरोधिपि च गृह्यते, प्रत्यक्पराङ्मुखत्वादिलक्षणेन साध्यविरुद्धेन व्याप्तचेत्यर्थ ( तुल्येति ) वाक्यस्याप्यपरोक्ष्य विरोधगोचरत्वादि

श्यता । अन्यथाऽऽम्नानेतु कथन्तु बलवत्तरम् ॥ यत्पुन अपरोक्षज्ञानस्य मो क्षहेतुत्वं श्रुतिसिद्धमिति । तावन्मात्राभ्युपगमेऽपि न नः काचित् क्षति ।

यत्तु - शब्दादेव शब्दस्यापरोक्षधीहेतुत्वं दर्शितम् । तद पि हास्यं, अन्यपरत्वस्य आकुमारंप्रसिद्धेः, साक्षात्कारहेतोर्मनस स्म- रणत्वया दृढव्यवसायहेतुतामात्रेणाप्य तदुपपत्ते । यथाश्रुतग्र हणेचक्षुरादेरपि स्वीकर्तव्यत्वात् । "श्रुतिस्मृतीतु विप्राणां नयने द्वे" इतिहिश्रूयते । "वेदान्तविज्ञानसुनिश्चितार्था" इत्यादिषु परोक्ष व्यवसायमात्रमेवोच्यते । यत्तु विज्ञानमिति विशेषणेन विशेषविषयत्वासि- द्धया निश्चयहेतुत्वे सिद्धेऽपि सुशब्देनविशेषणा दपरोक्षनिश्चयहेतुत्व सिद्धमिति। तदप्यत्यन्तपरिहास्य, अकम्पनीय व्यवसायविवक्षया सुशब्दप्र योगात् । य पुन तत्त्वमस्यादिवाक्यजन्यज्ञानत्वादिति प्रयोग ,स तज्जन्यश्राव णज्ञानेनैकान्तिक । अतिप्रसङ्गश्च - वाक्यान्तरेष्वप्येव प्रयोक्तु श क्यत्वात् । परिहारस्यच समत्वात् । विषयजन्येषुच व्याप्तेस्सङ्कोचात् ॥ नवाक्यजन्यताहेतुः प्रत्यक्षत्वेतु किं पुन । अर्थजन्यत्वमेवस्यात्

---

यन्धः परिभवइतिचेन्न, सञ्जातेप्यपरोक्षेपीत्यादिना अपरोक्षबाधेपि भ्र माद्यनुवृत्तेः प्रागेवदर्शितत्वात् । (कथन्त्विति) द्वैतविषयत्वा दविरोधा द्बलाबलचिन्तैव का इतिभावः । निश्चितपदेन निश्चयहेतुत्वे सिद्धेपि सुविशेषणं - विशेषविषयत्वार्थस्या दित्यत्राह (विज्ञानमिति विशेषणे न विशेषविषयत्वसिद्धयेति) । (तज्जन्येति) श्रवण - श्रोतव्यइति विहितं विवक्षितम्, ततो जात- श्रावण, माधमिकपरोक्षज्ञाने व्यभि चारइत्यर्थः । अग्निहोत्रादिवाक्ये प्रयोगो प्रयोजकइत्यत्राह (परिहार स्यचेति) मिथ्यार्थनिवृत्त्या अपरोक्षज्ञानकल्पनस्य निरासादिति भा वः । योगजधर्मादिजन्य जन्यत्वावच्छिन्नसाक्षात्कारित्वव्यापकं विषय जन्यत्वमुपाधिश्चेत्याह (विषयेति) (नवाक्येति) प्रत्यक्षत्वेतु न वा क्यजन्यत्वं, हेतु - प्रयोजकः, किन्तु अर्थजन्यत्वमेव हेतुस्स्यात् ततश्च

तत स्सोपाधिकस्त्वयं ॥ वाक्यविषयप्रत्यक्षेपिवाक्यस्यैवार्थत्वा दर्थजन्य
न्योपाधेः साध्यव्यापकत्वाविरोधः । यश्च- स्वप्रकाशार्थोपदेशरूपत्वात्
स्वतः प्रत्यक्षार्थविषयत्वाद्वेति, सोपि पूर्ववदेवानैकान्तः । दृष्टान्तस्यच
साध्यविकलत्वं दर्शितमेवेति ॥

प्रतिप्रयोगश्च । विगीतंवाक्यं नस्वार्थविषयप्रत्यक्षज्ञानजनकं- वाक्यत्वात्

---

यं सोपाधिकइत्यर्थः । किं याव तत्वमस्यादिवाक्यव्यक्तयः प-
क्षः, उतश्रवणाद्यनन्तरभाविव्यावर्त्तमात्रं ? आद्ये मननात्प्राथमिकव्य
क्तावंशतोबाध मभिप्रेत्य द्वितीये तत्रैव व्यभिचारमाह (सोपीति)(दृष्टान्त
स्येति) स्वप्रकाशत्वस्य दशमत्वस्यचा स्वप्रकाशत्वात्, स्वत प्रत्यक्षत्वा-
भावाच्चेतिभावः । ( विगीतमिति )

ननु - साध्येस्वशब्दस्य जन्यपरत्वे तत्त्वमसिवाक्यार्थ
विषय प्रत्यक्षस्याप्रसिद्धेः तज्जनकस्याप्रसिद्ध्यातद्भेदसाधनमनुप-
पन्नं, जनकपरत्वे कस्यापिवाक्यस्यस्वार्थगोचरप्रत्यक्षजनकत्वाभावात्
प्रतियोग्यप्रसिद्ध्या तद्भेदसाधनमनुपपन्नं, स्वार्थशब्देनस्वजन्यज्ञानवि-
षयत्वं विवक्षित्वा इन्द्रियेप्रतियोगिप्रसिद्ध्युपपादनेबाधः, स्वस्यैवस्वजन्य-
श्रावणज्ञानविषयतयास्वार्थत्वात् विषयतयास्वगोचरज्ञानजनकत्वाच्च ।
स्वार्थशब्देन भिन्नत्वमात्रं विवक्षित्वा स्वभिन्नविषयप्रत्यक्षजनकं-
नभवतीत्युक्तौ बाधोदृष्टान्तासिद्धिश्च, स्वजन्यश्रावणज्ञानस्य तकारत्वा
दिविषयत्वात् । नन्वस्तु स्वशब्दोभिन्नपरएव, नच-तत्त्वमसिवाक्यार्थ-
प्रत्यक्षाप्रसिद्धिः , घटादिगोचरप्रत्यक्षस्यैव प्रमेयत्वसामान्यलक्षणप्र-
त्यासत्तिजन्यस्य तत्त्वमसिवाक्यार्थ गोचरत्वादितिचेन्न । बाधादेवतत्व-
मसिवाक्यगोचरसामान्यलक्षण प्रत्यासत्तिजन्यज्ञानस्यापि तत्वमसिवा-
क्यार्थगोचरतया वाक्यस्य तत्र जनकत्वात् । नच - सामान्यप्रत्यास-
त्तिजन्यज्ञानेसन्निहितविषयप्रतियोगिकलौकिकप्रत्यासत्ते जनकत्वाभा-
वा त्तस्य प्रत्यासत्तिद्वारकं जनकत्वमितिवाच्यं । सन्निकृष्टविषयां-
शे लौकिकप्रत्यासत्तेर्विद्यमानतया तस्याजनकत्वस्या ऽवर्जनीयत्वात् ।
नत्वप्रतिबद्धा सामग्रीकार्यंजनयतीतिनियमस्यरतुंशक्यं, 'कस्यचित्

प्रतिबन्धकत्वकल्पनेच न किञ्चित्प्रमाणमस्ति । अस्तुतर्हि जनकपरमेव, नच - प्रतियोग्यप्रसिद्ध्यासाद्ध्याप्रसिद्धिः, शब्दोवर्त्ततइति वाक्येस्वार्थविषयप्रत्यक्षजनकत्वस्य प्रसिद्धत्वादितिचेत्, न, तत्रैव व्यभिचारात । अस्तुतर्हिस्वजन्यज्ञानविषयप्रत्यक्षजनकत्वाभावस्साद्ध्यः, इन्द्रियेच प्रतियोगिप्रसिद्धिः, नचबाधः, विषयतातिरिक्तरूपेण स्वजन्यत्वस्य विवक्षितत्वात, वाक्यप्रत्यक्षस्य विषयतारूपेणैव तज्जन्यत्वात्, स्वकरणकत्वया स्वजन्यत्वमिहविवक्षितमितिचेन्न । शब्दोवर्त्ततइत्यत्र व्यभिचारात । अस्तुतर्हि स्वभिन्नविषयप्रत्यक्षजनकत्वाभावः, नच तत्कारत्वादि प्रत्यक्षजनकत्वात बाधः, स्वगोचर प्रत्यक्षाविषयत्वस्य स्वभिन्नविशेषणत्वात्, यद्यप्येवं नेन्द्रिये प्रतियोगिप्रसिद्धिः, तथापि शब्दस्पर्शादिप्रत्यक्षजनकेशरीरेप्रसिद्धिरितिचेन्न । सर्वस्यापि शरीरादिविषययोगिप्रत्यक्षादिविषयत्वेनाप्रसिद्धेरिति ।

उच्यते - साध्येन्चपदभिन्नपरमस्तु, साद्ध्यप्रसिद्धिश्च, सामान्यप्रत्यासत्त्या सर्वविषय प्रत्यक्षजनकेन्द्रिये । नचोक्तबाधः, स्वार्थविषयत्वावच्छेदेन प्रत्यक्षजनकभेदस्य साद्ध्यत्वात्, इन्द्रियस्य प्रत्यासत्तिभूतसामान्याश्रयसर्वविषयावच्छेदेन प्रत्यक्षजनकत्वात्, विषयस्य च स्वविषयतावच्छेदेनैव विषयतयाजनकत्वात् । न च - शब्दोवर्त्ततइत्यत्र व्यभिचारः, स्वागोचरवृत्तिकवाक्यत्वस्य हेतुत्वात्, शब्दावर्त्ततइत्यस्य स्वगोचरवृत्तित्वात । अस्तुवास्वपद जनकपर, नचोक्तव्यभिचारः, पूर्ववदेवहेतुविशेषणात् । अस्तुवाविषयतानवच्छिन्न स्ववृत्तिकारणतानिरूपितजन्यताश्रयज्ञानविषयप्रत्यक्षजनकत्वाभावस्साद्ध्यः-प्राग्वदेवहेतुविशेषणाच्चन पूर्वोक्तव्यभिचार । अस्तुवास्वकरणकत्वस्वजन्यत्व, नच पूर्वोक्तव्यभिचार, ज्ञानप्रत्यक्षपदव्यत्यासेन स्वकरणकप्रत्यक्षविषयकज्ञानजनकभेदस्य साध्यत्वात् । अस्तुवा स्वगोचरप्रत्यक्षाविषय स्वभिन्नविषयप्रत्यक्षजनकत्वाभावः, शरीरादौच प्रतियोगिप्रसिद्धता, नच - सर्वस्य शरीरादिविषययोगिप्रत्यक्षादिविषयत्वात् साद्ध्याप्रसिद्धि, योगजधर्माजन्यत्वेन स्वगोचरप्रत्यक्षविशेषणात् । अत्रच साध्येवाक्यत्वादित्येव हेतुरिति । प्रत्यक्षकरण नभवतीतिवा, विषयतातिरिक्तरूपेण प्रत्यक्षज

ज्योतिष्टोमादिवाक्यवत् । तथा विगीतार्थो न स्वविषये प्रत्यक्षावाक्यजन्य त्वेसति वाक्येतरविषयत्वात् स्वर्गयागादिसम्बन्धबुद्धिवत् । नचात्रश्रुतिविरुद्धतयाकालात्ययापदेश , श्रुतेरन्यपरत्वस्थापनात् । नच दशमस्त्वमसीत्यादि वाक्येन तज्जन्यज्ञानेनवा नैकान्तिकता , तत्र साक्षात्कारप्रसङ्गस्यापि निषिद्धत्वात । नच पूर्वैरेव हेतुभिस्सत्प्रतिसाधनता, उपलम्भानुरोधेना नतिप्रसञ्जकव्याप्तिमूलतया प्रबलत्वात , समत्वेपि प्रकरणसमत्वापादनदशायामन्योन्यप्रतिरोधस्येष्टत्वेन तत्प्रसङ्गानुपपत्तेश्च । न च विपक्षे बाधकविरहादप्रयोजकता , अविशेषात् , शब्दान्तराणामपि प्रत्यक्षज्ञानजनकत्वस्य बाधकस्यच सत्त्वात् । नचाप्रत्यक्षार्थविषयतयातेषां तदनुत्पादकत्वमिति वाच्य । तथाप्ययघट दशमोय मित्यादिवाक्याना

---

नक न भवतीतिवा, प्रत्यक्षजनकतावच्छेदक विषयतातिरिक्तयावत स्ववृत्तिधर्मवत्त्वमिति वा साध्यम् । अत्र चरमसाध्येविषयतातिरिक्तपद बाधव्यभिचारवारणाय । एवच स्वतोपरोक्षार्थविषयत्वादे रजयच्छेदकत्वसिद्धेरिष्टसिद्धि ।एतेषुत्रिष्वपि साध्येषु वाक्यत्वादित्येव हेतुरिति । (विगीतेति) तत्त्वमस्यादिवाक्यजन्यातद्गोचराधी. पक्ष । स्वप्रकाशतया स्वांशे प्रत्यक्षत्वात् बाधवारणाय साध्ये स्वविषयइत्युक्तम् । वाक्येतिघटप्रत्यक्षे व्यभिचारवारणाय विशेषण । वाक्यप्रत्यक्षवारणाय विशेष्य । वाक्येतरपद - वाक्यतरमात्रपर । तेन वाक्यजन्यत्वे सतिवाक्याविषयत्वपर्यवस्यति ( अनतिप्रसञ्जकेति ) अग्निहोत्रादिवाक्येष्वन्यस्य परोक्षधीजनकत्वस्य तन्न्यायेन सभवाद्यथातत्त्वमस्यादिवाक्यजन्यज्ञानत्वेनापरोक्षधीजनकत्वसाधने तिप्रसङ्ग नतथास्मदुक्तव्याप्ताविति बलवत्त्वमिति भाव । ( समत्वेपीति)स्थापनानुमानस्यहि प्रतिरोधो दोष प्रत्यनुमानस्य तु स्थापनाप्रतिबन्धैकफलत्वान्न प्रतिरोधो दोष इत्यर्थ । वस्तुतोस्त्येव विपक्षे बाधकमित्याह ( नचेति ) ( अविशेषादिति ) ज्योतिष्टोमादिवाक्य व्यावृत्ता वान्तरोपाधे रभावा दित्यर्थ ॥ प्रत्यक्षार्थविषयत्व तत्त्वमस्यादिवाक्य विगम , ज्योतिष्टोमादिवाक्येतु

विरोधेतु युक्तः कल्पनपरिग्रह " इति न्यायात् । यदिच - यत्किञ्चि
द्विपदो बाधकमित्यभिमानमात्रेण परिगृह्यानुमिनोपि । तदा - ज्यो
तिष्टोमादिवाक्येपि भवादृशः कोपि तथा तदभिमत्या अनु
मिनुयादेव । एवं सिद्धसाधनत्वा नैकान्तिकत्वा तिप्रसञ्जकत्वा भास
सामानयोगक्षेमत्वान्यथासिद्धत्वादि दोषदूषितत्वा दनुमानविशेषो
त्प्रेक्षणमेव निपुणधिया मिसादयिषितस्य प्रामाणिकत्वा
नुमिति मन्तर्गता सूचयति । अतएवास्मिन्नर्थे महाविद्यादिप्रयोगा
न्तरमनोरथोपि भग्न । यत्तु शब्दस्य प्रत्यक्षान्तर्भावप्रसङ्गे
स्ततो परोक्षब्रह्मात्मविषयशब्दान्यावेसानि अपरोक्षप्रमिति कारणत्व
प्रत्यक्षान्तर्भावप्रयोजकमित्युक्तं , तत् तत्त्वमस्यादेरपरोक्षधीजनकत्वे
वक्तव्यम् तत्तु नाद्यापि सिद्ध्यतीति तत्प्रसङ्गो दुर्वार । तदे
व वाक्यजन्यसाक्षात्कारासिद्धे परिशेषा त्तज्जन्यपरोक्षज्ञानेनैवाप्र
तिबद्धसामग्रीसमुद्भवेन बाधदृति स्थितौ श्रवणादिविधिनैरर्थक्य प्रागुक्त
मुस्थितमेव । नतश्च श्रुतवेदान्तानां सरागानुवृत्तिदर्शनविरोधो दुर्वार ।
बाधितानुवृत्तिस्तु बाधिता जीवन्मुक्तिच निरासेण दूषयिष्याम ।

संगः । देहातिरिक्तात्मानुमिति गोचरसाक्षिविषयाज्ञानाभावात् पूर्णब्र-
ह्मविषयाज्ञानस्य भिन्नविषयानुमित्या निवृत्त्यसम्भवात् । शुद्धे सत्य
ज्ञानानन्दात्मके ब्रह्मणि नियमेन पक्षसाध्यादि वैशिष्ट्य विषयानुमि
ति र्नसंभवत्येव । तत्त्वमस्यादिवाक्य सन्निधावेव " तस्य तावदेव चि
र यावन्नवि मोक्ष्य " इति श्रवणेन ' वेदान्तविज्ञान सुनिश्चितार्था ' इति
वचनेनच श्रुतिजन्यज्ञानस्यैव मुक्तिसाधनत्वावगमात् । नचैवं - आत्मा
नुमितेरपि प्रत्यक्षत्वेन व्यवहारप्रसङ्गः प्रत्यक्षव्यवहारस्येन्द्रि-
यजन्यमात्रगोचरत्वात् । नच चक्षुरादाविवापरोक्षप्रमाणव्यवहारापत्तिः ।
अस्मानुमानं ह्यन्यत्र लिङ्गापरोक्षताविशिष्टार्थविषयतया देवादपरोक्षं नाच
धर्मापरोक्षताया निमित्तं । चक्षुरादिकंत्वर्था परोक्षतायां प्रयोजकत्वेने
नैव विशेषणत्वमात्रगोचरापरोक्ष व्यवहारः । तस्मात् तत्त्वमस्यादि
वाक्यजन्यज्ञानं न परोक्षं अपरोक्षार्थविषयत्वात् चाक्षुषज्ञानवत् । तत्त्वमसि
वाक्यार्थ विषयज्ञानमपरोक्षं अविद्यानिवर्तकत्वात् सम्प्रतिपन्नवत् । नचेन्द्रि
यजन्य त्वमुपाधिः, त्वदभिमतजन्यप्रत्यक्षे सुखादि प्रत्यक्षे दशमस्त्वमसीति
ज्ञानेच साध्याव्यापकत्वात् । नच जन्यज्ञानस्य परोक्षत्वाभावे इन्द्रियजन्यत्व
मुपाधिः, जन्यज्ञानापरोक्षत्वे लिंगजन्यत्वस्यवतस्याप्रयोजकत्वात्, अपरोक्षा
र्थविषयत्वेनैवतत्राप्यपरोक्षत्वाद्भिन्नेन तस्यापरोक्षत्वाभावस्याप्रसिद्धेः । अत
एवनशब्दाजन्यत्वमुपाधिः । अन्यथा तत्त्वमसिवाक्या दपरोक्षज्ञाना
भावे अविद्यानिवृत्त्यभावाद्निर्मोक्षप्रसंगश्चेति ।

अत्रोच्यते - अखिलतावल्लोके ज्ञानार्थयो रपरोक्षत्व व्यवहा
रः, तत्रयदर्थगत मपरोक्षत्व तद्विषयत्व निबन्धन एवज्ञानतद्व्य
वहार इत्युच्यते, तदाऽवेददेवेन साक्षात्क्रियमाण घटविषयकशाब्द
ज्ञान पदद्वयस्य जाते तदुभयवेदिनः शाब्दज्ञाने अपरोक्षव्यव
हार प्रसंगः । स्वाश्रय प्रत्यपरोक्षार्थ विषयत्व निबन्धनो ज्ञानेऽपरो
क्षत्वव्यवहार इत्युच्यते, स्वाश्रयं प्रतीत्यत्र विवक्षित स्वाश्रयप्रति
संबन्धित्वं,किं स्वाश्रयाभिन्नत्व,अन्यद्वा? नाद्यः, लौकिकानां प्रमातृधर्मयोः
प्रतीतावपि, ज्ञाने अपरोक्षव्यवहारात् । नद्वितीयः, अनिर्वचनात् । स्वाश्रय
संबन्ध्यपरोक्षभिन्नत्वंतदिति चेन्न , मदीयत्वेनभासमानस्य पुत्रधनादेरपा
परोक्ष चैतन्यस्य भिन्नस्यैव प्रतीतेः । तस्मात् स्वाश्रयसंबन्ध

धर्मगतं स्वीकार्यं स्यात् । किंच – वह्निमनुमिनोमीतिवत् पर्वतमनुमिनोमीत्यव्यवहारात् अनुमेयत्वमप्यनुमितिविषयत्वादन्यत्स्यात् । तस्मात् ज्ञानगतमेवाऽपरोक्ष्यं , "यत्साक्षादिति" श्रुतिस्तु स्वप्रकाशतादिपरत्वेनाप्युपपन्ना, साक्षादिति - घटादाविव ज्ञानान्तराधीनसाक्षात्त्वस्य निषेधसंभवात् । किंच - यदि सत्तानुभवइव परोक्षत्वानुभवोऽपि तदाधीनं नामगोचरस्स्यात्, तदा सत्ववदपरोक्षत्वमपि निष्प्रतियोगिकं स्यात् । अत - किंचित् प्रति कदाचिदपरोक्षं कंचित् प्रति कदाचित्तन्न स्यात् । यदप्युक्तं- अपरोक्षार्थं विषयत्वं वृत्तेरपरोक्षत्वमिति । तत्रापरोक्षत्वमित्यस्य अपरोक्षव्यवहारनिमित्तमित्यर्थः । तथाच प्रत्यक्षव्यवहारस्य इन्द्रियजन्यमात्रगोचरतयेति स्ववचनविरोध । नच - नेदं लौकिकव्यवहारनिबन्धनं, किन्तु - परीक्षकव्यवहारनिबन्धनमिति वाच्यम् । एतन्य नैय्यायिकाद्यपरोक्षव्यवहारनिबन्धत्वाभावात् । नच - स्वसमयपरीक्षकव्यवहारनिबन्धनं , त्वदभिमतत्वाभिमतप्रत्यक्षत्वसाधनेऽपि उभयसंप्रतिपन्नापरोक्षनिष्ठस्यास्मदभिमतस्य परोक्षव्यवहारनिबन्धनस्य शाब्दज्ञाने असाधनेनार्थान्तरत्वात् । नच - सर्वत्रापि इदमेव व्यवहारनिबन्धनं , नन्वदभिमतं, इदमव्यवहारं ज्ञानेऽप्यस्तीति साध्यतइति वाच्यम् । स्वोक्तिविरोधादेर्दर्शितत्वात् । किंच - किमत्रापरोक्षार्थविषयत्वसाध्यते , उताऽपरोक्षार्थेऽपि नान्यत्रापविषयत्वं ? । आद्येऽपि ब्रह्मणोऽपरोक्षत्वे सिद्धे तद्विषयत्वं साध्यते, उतासिद्धे । नाद्य सिद्धसाधनात् । नहि तत्त्वमस्यादिवाक्यस्य ब्रह्मविषयत्वे कश्चित् विप्रतिपद्यते । नन्वस्तु द्वितीय पक्ष , तत्र ब्रह्मविषयत्वस्य सिद्धत्वा दपरोक्षत्वसाधने पर्यवस्यतीति चेन्न । स्वप्रकाशत्वादिना प्रतितस्यापि सिद्धत्वात्, अथ प्रति साधनेऽपि सिद्धसाधनमेव नैय्यायिकादिभिरपीश्वरस्यापरोक्षत्वाङ्गीकारात् । ननु - ते स्वकीयापरोक्षज्ञानविषयत्वेनापरोक्षत्वं नाङ्गीकुर्वन्ति स्वरूपतः अपरोक्षत्वमङ्गीकृतमितिचेत् तर्हि घटादावपि दृष्टान्ते तादृशं तैरङ्गीकृतं अतस्साध्यविकलो दृष्टान्त । घटाद्यधिष्ठानचैतन्याभेदादापरोक्ष्योपपादने चैतन्य अपरोक्षत्वासिद्धयानिष्टिप्रा

श्रीमतेरामानुजायनमः ।

श्रीमतेनिगमान्तमहादेशिकायनमः ।

॥ अथ अष्टमोपाद ॥

शास्त्रैक्येविषयाद्यभेदनियते सगत्यधीनक्रमे
कर्मालोच्य तदङ्गिकामथपराविद्यामुपादित्सुभि ।
यस्त द्वैधतया स्वय फलतया च्यारोहतिज्ञेयता
कुर्वीतेष विभु श्रिया सह मम स्वान्त निजान्त पुरम् ॥ * ॥

परिमितगुणाल्पानादेवान् फलफलसाधना
न्यधिगतशुचस्सर्वदुष्ट समीक्ष्यवृणीमहे ।
हरिमधिगत[त्रि]त्र्यन्ताचार्य[र्य]हरेश्वरणौचत
त्प्रसदनकरीविद्या श्रुत्यन्तगाश्चवृणीमहे ॥ ॥

शास्त्रायमाणदृष्टान्तश्रुतर्कयुक्त पूर्वापरागघटना विकसन्मुदेव ।
मीमासयाप्रकटितागमितार्थसार्थं नित्य रमानिधिगुरु शरणप्रतीम ॥

( शास्त्रैक्यइति ) सर्वत्र प्रतिपाद्यैक्यादेवहि वाक्यैक्य, अत इ हापि वेदार्थस्यवा साराधनब्रह्मणोवा विषयत्वा दैकग्रन्थता । आदिपदेन व्याख्येयग्रन्थैक्य गृह्यते । तदैक्याद्धि वामनजयादित्यवृत्त्योरैक्यहेतु । अनेन वक्तृभेदात् भेदशङ्कानिरस्ता । ( सगत्यधीनइति ) त्रिवर्गप्रथमपा दण्यादिना क्रमेच सिद्धसतीत्यर्थ । ( परामिति ) सद्विद्यादिका ब्रह्म विद्यामित्यर्थ । ( तदिति ) परविद्याविषयतया फलतयाच विचा यतामधिरोहतीत्यर्थ । ( कुर्वीतेति ) एव मीमासया प्राप्यत्वेन प्रा पकत्वेनच निर्णेतव्योपि स्वरूपामेव न्यायस्थानमभिषिच्य स्वस्यैवप्रयो जनतया मम स्वान्ते नित्य सन्निधत्तामित्यर्थ । न्यायतो निर्णये क्रिय माणे देवतान्तराद्विविरुद्धायाना प्रसन्नतान्निषेध कार्य प्रपर्यवत सनि

इहनाव दानन्तर्यार्थे प्रचुरप्रसिद्धिक मथशब्द मादौ प्रयुञ्जानस्य सूत्रकारस्य तत्सम्भवे तदर्थते वाभिमते स्वर्गकार्यम् । तत्सम्भवश्च यदि नियतपूर्ववृत्तमसाधारण तथाज्ञापने सप्रयोजनच किमपि स्यात् , तदास्यात् । अन्यथा नस्यात् । यथा - "अथ योगानुशासन" मित्यादौ । नहि यदृच्छागत यत्किञ्चिन्निमेषोन्मेषादिक मक्षिकासञ्चारादिक वा पूर्ववृत्ततयात्र वक्तु युज्यते, तस्य सर्वत्र सम्भवात् , अभिधानप्रयोजनविरहाच्च । अतएव सर्वपुरुषव्यापारसाधारणापेक्षित भोजनादिपूर्ववृत्तत्वोक्तिरपि निरस्ता, विशेषनियमाभावात् । अव-धानामनस्संयोगादिकमपि न विचारविशेषप्रति विशेषहेतु, सर्व शास्त्रसाधारण्यात । सामग्रीतु तथास्यात् , तदुक्तिरपि यदि साम .

---

धाने तेषां प्रसङ्गएव नास्ती त्यन्त पुरशब्दप्रयुक्तानस्यभाव । नहिराज्ञामन्त पुरे पृथग्जनानां प्रसङ्गोस्ति, येन तन्निष्कालनाय यत्नः कर्तव्यः ।

इहवादे साधनचतुष्टय पूर्ववृत्त स्याथशब्दविवक्षितत्वनिरासपुरस्सर कर्मविचारपूर्ववृत्तत्व व्यवस्थाप्यते । तत्रा थशब्दस्यानन्तर्यार्थत्वे निर्णीतेहि तच्चिन्तावकाश , अत उपोद्घातेनाथशब्दस्याऽनन्तर्यार्थत्व पूर्व पक्षिमुखेन व्यवस्थापयन् पूर्वपक्षमाह ( इहतावदिति ) नित्यानित्य विवेकस्यैव पूर्ववृत्तत्व मिति कुतो निर्धार्यते, अन्यस्यापि सम्भवादित्य त्राह ( तत्सम्भवश्चेति ) ( अथ योगेति ) तत्र हि सप्रयोजनाभिधा-नस्य नियतपूर्ववृत्तस्याभावा दथशब्दो धिकारार्थत्वेन व्याख्यातइत्य-र्थः । एव मन्यथा न स्यादित्येतस्योदाहरणं दर्शितम् । एवमपि - कथमन्येषां निरासइत्याशङ्क्याह ( नहीति ) यदृच्छयेत्यनेन नियमाभाव स्सर्वत्रेत्यसाधारण्याभावश्च ख्याप्यते । तथात्वज्ञापने सप्रयोजन चेत्यनेना पीद निरस्तमित्याह ( अभिधानेति ) अतएवे त्येत द्विवृणोति ( विशेषेति ) भोजनादे स्सापेक्षितत्वात पृथङ्निरास । ( अवधानेति ) इन्द्रियाणा विषयान्तरासञ्चार : अवधान, विचारज्ञानानिय-

र्मीत्वेनेण, तदपि सर्वकार्यसाधारण्यात् तदभिधानवैयर्थ्याच्च निरस्तम् । तेन सामग्रीविशेषविशेषक विशेषकारणमेव वाच्यम् । अत स्सप्रयोजनाभिधानासाधारण नियतपूर्ववृत्तवस्तुगवेषणे नित्यानित्य वस्तुविवेकादि साधनचतुष्टय पूर्ववृत्त, तस्यैव ब्रह्मजिज्ञासाया नियमेनापेक्षितत्वात्, तदुक्ते श्चाधिकारिविशेषप्रतिपादनार्थतया सप्रयोजनत्वाच्चेति यदुक्त तत्परामृशाम ।

तत्र नित्यानित्यवस्तुविवेकस्तावत्कथंभूतइति । किं इदवस्तुनित्यमिदं वस्त्वनित्यमित्येव मात्मा, उतनित्यानित्ययोर्वसतीति नित्यानित्यवस्तु तच्च नित्यानित्ययो र्धर्म - हेयत्वोपादेयत्वे इत्यर्थ इति वाचस्पतिकल्पित प्रकारइति' । तत्र नप्रथम । तस्य वेदान्तश्रवणात्पूर्वमसिद्धत्वात् । तत्रैवह्यात्मादेर्नित्यत्व वियदादेश्चानित्यत्व विविच्यते । तथाचान्योन्याश्रयणम् ॥ * ॥ वेदान्तश्रवणेसिद्धे नित्यानित्यविवेकधी । नित्यानित्यविवेकेन वेदान्तश्रवणस्थिति ॥ * ॥ अथ—यदि शास्त्रान्तरात्तद्विवेकइति मन्यसे । तदा विपरीतविवेकापत्ति । वियदादयोवैशेषिकादिभि नित्याएव परिगृह्यन्ते, आत्मादयश्च सौगतादिभिरनित्या अस्तीरा । अथा दूरविप्रकृष्टप्रसाम्ययोगशालित्वेन तद्विवेकइतिचिन्तयसि । तर्हि - तत्रैवा त्मानात्मविवेकसिद्धे किं ब्रह्ममीमांसया । अनन्यलभ्यहि शास्त्रफलम् । विशेषज्ञसयर्थमिति चेन्न, निर्विशेषे त

---

स पूर्ववृत्तत्वा दवधानारममनस्संयोगादेः पृथग्विरास । ( तत्रैवेति ) आदिशब्देन कालादि स्वमतेन गृह्यते । ( विपरीतेति ) वेदान्ते यदि श्रो नित्यानित्यविवेकोऽभिमत , तद्विरुद्धनिश्चयएव शास्त्रान्तरे भवतीति न तस्य तत्रोपयोगइति भावः । विरुद्धनिश्चय मेवोपपादयति ( वियदादयइत्यादिना ) ( तर्हीति ) आत्मानात्मविवेकार्थाहि ब्रह्ममीमांसा , तस्यच तत्रैव सिद्धे ब्रह्ममीमांसायां प्रवृत्ति र्नस्यादित्यर्थ । अत्रापि तत्सिद्धे तत्रापि प्रवृत्तिस्स्यादित्यत्राह ( अनन्यलभ्यमिति ) नियतापेक्षितेन शास्त्रान्तरेण विवेकासिद्धा वेतस्य निष्फलत्वमेव

रेण तद्व निराकरिष्यमाण साख्यादितन्त्ररपि नाश्वसिद्धि । नहि तद्वा तादृग्नेति कश्चिद्विशेषइति न्यायात् अविरुद्धाश स्वीकुर्मइति चेत्, क स्तर्हि सौगतेषु ते प्रद्वेष । तेष्वपि भवदुपजीव्यानहनोर्थरा शयस्सन्ति । कथचायमर्थो न विरुद्ध अयन्तु विरुद्धइति वेदान्तश्रवणात् पूर्वमवगन्तुमसि? । तथाच तत्राप्यन्योन्याश्रयणम् । द्वितीयपदे

---

ब्रह्मविचाराधिकारिण स्साख्यशास्त्राप्रामाण्यज्ञान मावश्यकमेव, अन्यथा तत्राप्रामाण्यज्ञानाभावेन तत्प्रतिपाद्यसत्यत्वाविरोधि प्रपञ्चमिथ्यात्वप्रतिपत्तये तत्प्रतिपादकब्रह्ममीमासाया प्रवृत्त्यसम्भवात् । तत्रच यदि साख्यशास्त्रान्नित्यानित्यविवेकात्प्रागेव वेदविरोधज्ञान स्यात्, तदा तत्राप्रवृत्ते नित्यानित्यविवेकएव न स्यात् । अथतु प्रवृत्तस्य नित्यानित्यविवेकानन्तर तत्र वेदविरोधज्ञान, तदा जातोपि नित्यानित्यविवेको न मुमुक्षाद्वारा ब्रह्मविचारोपयोगीस्यात्, अनाश्वासप्रस्तत्वात् ।

ननु महर्षिप्रणीतस्य साख्यतन्त्रस्य कथ-निरासइत्यत्राह (नहीति) वेदविरुद्धत्वाविशेषात् सौगतजन्त्रवदेव तन्निराकरणमिति भाव । यद्वा सौगततन्त्रे प्रवृत्त्यभावउक्ते महर्षिप्रणीते साख्यतन्त्रे कथ प्रवृत्त्यभाव इत्यत्राह (नहीति) नहिसौगतसमयत्वादप्रवृत्तिरुक्ता, किन्तु - वेदविरोधित्वेना प्रामाण्यादेव, अत प्रयोजकत्वाविशेषात् तस्मिन्निव तादृशेपि प्रवृत्ति र्नस्यादेवेति भाव । (तेष्वपीति) ततश्च मिथ्याध्यवसायार्थं सौगतमतेपि प्रवृत्तिस्स्यादिति भाव. । (कथचायमर्थइति) आत्मनित्यत्व मविरुद्ध, अन्यत्तुविरुद्धमिति वेदान्तै रात्मनित्यत्वादिनिर्णयात्मा कथ निश्चीयत इत्यर्थ । तथाचा विरुद्धाश स्वीकुर्मइति न युक्तमिति भाव (तथाचेति) वेदान्तश्रवणानन्तर अविरोधज्ञाना दविरुद्धसाख्याशश्रवण, तद्ग्रहणे अधिकारसिद्ध्या वेदान्तश्रवण मित्यन्योन्याश्रय इत्यर्थ । (द्वितेति) अयमपांशविरुद्धइत्यधिगच्छामीति शेष ।

शि पित्रादिवचनविस्रम्भादिति चेत्, तर्हि - तत एव नित्यानित्यवस्तुविवेकोऽपि सिध्यति, किं साख्यादिकपोलकण्ठकणिकावादेन । अस्त्वेवमपि का मोहानिरितिचेत्, वेदान्तश्रवणहानि । तदुपदेशमात्रेणाप्यात्मनित्यवत् समस्तार्थविस्रम्भोपपत्ते । सर्वस्यापि विवेकस्य आत्मानात्मविवेकार्थतया तत्सिद्धौ ज्ञातव्यान्तरपरिशेषाभावात् ।

---

ननु यस्य पुरुषस्य हितैषिवचनात् नित्यत्वादावेव विस्रम्भो जात, अर्थान्तराणां हितैषिणामुपदेशाद् विस्रम्भ, तस्य शास्त्रश्रवणं सेत्स्यति, नचैवसति आत्मनित्यत्वस्य पूर्वमेव ज्ञाततया जिज्ञास्यत्वाभावेन, आरम्भसूत्रविषयत्वाभावात् इह निरूपणं न स्यादितिवाच्यम्, प्रसङ्गादपि तदुपपत्तेरित्यत आह (सर्वस्यापीति) विवेकस्य विवेकसाधनस्य ।

ननु - नित्यानित्यवस्तुविवेके जातेऽपि आत्मैकत्वं न ज्ञातम्, अतएवहि "आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते" इत्युक्तम्, तथाऽऽनन्दात्मकत्वं प्रपंचमिथ्यात्वञ्च नज्ञातमेवेति चेन्न। आत्मैकत्वादिज्ञानस्य सत्यमिथ्याविवेकस्यच श्रवणात् प्रागेव वाच्यत्वात्। तथाहि - आत्मनित्यत्वज्ञानंहि तस्यैवानन्दात्मकस्य प्राप्यताज्ञानान्मुमुक्षाहेतुर्भवति, नान्यथा। नह्यतिशयितनित्यपुरुषार्थस्य प्राप्यताज्ञानंविना क्षुद्रादनित्याच्च पुरुषार्थान्निवृत्ति । नापि नित्यस्यानन्दात्मकस्य स्वस्यैव प्राप्यताज्ञानं मुमुक्षाहेतु, तस्यानादिसिद्धताज्ञानेन श्रवणादिप्रवृत्त्यनुपपत्ते । अतो ब्रह्मस्वरूपस्याखण्डानन्दात्मकस्य प्राप्यताज्ञानादेवेतिवाच्य । ततश्च भिन्नस्याभेदाप्रभवा दभेद एव पारमार्थिक । किंचिज्ज्ञत्व सर्वज्ञत्वादिभेदो मिथ्यैव । अतो भेदभ्रमनिरासेन ब्रह्मैव प्राप्यमिति बुद्ध्यैव मुमुक्षोत्पत्तिरिति किंनाम ज्ञातव्यमवशिष्यते । एवमात्मैकत्वादिकमपि ज्ञानस्यभेदे त्वभिप्रेत्यैव "आत्मानात्मविवेकार्थतये" त्यनुगृहीत, नतु नित्यानित्यविवेकार्थतयेति, त्वदभिमत स्सर्वोऽपि विवेकस्सिद्ध एवेतिहि सामान्यनिर्देशस्य भाव ।

एतेन यदाहुर्नवीनाः - नतावन्नित्यानित्यविवेकासंभवः, आमुष्मा दामजलोक कर्मकार्यंच सर्वं मनित्यं घटादिवत् " तद्यथेह कर्मचितोलोकः क्षीयते " इति श्रुतेश्चेति न्यायानुगृहीत स्पष्ट श्रुत्यैव विचारात्प्रागेव कर्मफलस्या नित्यत्वावधारणसंभवात्, आत्मा च नित्य इत्यवगम्यते । अन्यथा - कस्यापि मते मोक्षाय प्रवृत्त्यसंभवात् । तस्यानन्दरूपत्वमपि परमप्रेमास्पदत्वात् " आनन्दाद्ध्येवख-ल्वि" त्यादि वाक्याच्च निश्चीयते । नचैव - विचारानारम्भप्रसङ्गः, अन्यस्याप्येवं निश्चेतुं शक्यत्वादिति वाच्यम् । यत्रहि मानान्तरविरोधो वर्तते, तत्रहि शब्दश्रवणमात्राद्व निश्चेतुं शक्यम् । अद्वैतसमन्वयश्च तत्तत्पूर्वपक्ष न्याय मानान्तरादिना प्रथम विरुद्धतया प्रतीयत इति न वाक्यमात्रा न्निश्चेतुं शक्यते । ब्रह्मणो नित्यानन्दरूपत्वन्तु न मानान्तरेण विरुद्धतया प्रतिसन्धीयतइति तच्छब्दादेव निश्चेतु शक्यते । नहि परमात्मनस्सुखाभेदे प्रत्यक्षविरोधोऽस्ति । नचानित्यसुखस्य नित्यात्माभेदविरोधः, अनुकूलतर्काभावेन सुखमात्रे अनित्यत्वावधारणायोगात्, सौषुप्तिकसुखावमर्शदर्शनेन जीवसुखस्यापि नित्यतया तद्विपरीतस्य न्यविषयत्वावधारण सम्भवात् । किंच येन यदद्न्यायेन निश्चितं, तेन इतरदपि न्यायेन निश्चेतव्यमिति न नियमः, पुण्यपापाश्च विविधबुद्धितया न्यायानश्चालौकिकविषयतयाऽति सूक्ष्म वा तन्नियमानुपपत्तेः । अन्यथा - धूमाग्न्योर्व्याप्ति स्सर्वैरेव गृह्यते ति सर्वापि व्याप्तिरेव ग्राह्येति वैशेषिकादिग्रन्थान्तरारम्भो व्यर्थएव स्यात्, एतादृशएव पुरुषोऽस्मिन् शास्त्रेऽधिकारी । तदुक्तम् " नात्यन्तमज्ञो नो तत्त्वज्ञोऽस्मिन् शास्त्रेऽधिकारवा " निति । एवञ्च ब्रह्मसुखस्य जीवसुखस्य च नित्यत्व तदितरभोगानाञ्चानित्यत्व सुनिरूपणं, ततो वैराग्य । नचैव - रहस्तिपादवैयर्थ्यं । नहि - तत्र नित्यानित्यनिरूपणमुखेन वैराग्य । किन्तु - संहतिप्रकारनिरूपणेन पूर्वोत्पन्नस्य दृढीकारः क्रियते । वैराग्योत्कर्षेन्द्रियोपरम दाढ्यैन मुमुक्षाद्वारा श्रवणादिदार्ढ्यसंभवात् प्राग विरक्तस्य स्वकाम्यफलविरोधि ब्रह्मज्ञानमङ्गुत्पत्तुपपत्त्यैतमेव वक्तव्यत्वात । एव - वैराग्ये शरीरेन्द्रियचेष्टाया मशोगृहेध -

,

तद्विचार्यशास्त्रमाधिकरोतीतिचेत् , तर्हि - तस्यैवाधिकरणसाध्यत्वा दितरवैयर्थ्यं । अदृष्टोपयोगितया धारणादिकमपि चिन्तनीयमिति चेत् , तर्हि तदर्थमेव ग्रन्थस्य ज्ञाननिवर्त्यत्वमपि चिन्तनीयम् ।

ननु - ब्रह्मविचारमात्रस्य कर्तव्यत्वं नेह प्रतिज्ञायते, किन्तु " श्रोतव्य " इति विध्युपयोगिन्यायप्रतिपादकत्वात् विहितविचारस्य कर्तव्यत्वं प्रतिज्ञायते. " श्रोतव्य " इत्यस्यच ब्रह्मदर्शनाय विचारः कार्यइति अर्थं , ब्रह्मदर्शनोद्देशेन विचारविधानंच ब्रह्मदर्शनस्य " निचाय्य तन्मृत्युमुखात्प्रमुच्यते " इत्यादिभि र्वेदान्तवाक्यै र्मोक्षार्थत्वे मोक्षसाधनत्वे सिद्धएव , तस्मा ज्ज्ञानस्य मोक्षसाधनत्वोपयोगिन्यायोपजीवनेनैव श्रोतव्यइति वाक्यप्रवृत्ते स्तदर्थविचारात्मक मिदमपि सूत्र तदुपजीवनेनैव प्रवृत्तमिति नतद्विचारकर्तव्यतैतत्सूत्रस्य विषयइति- चेत् , स्यादेव , यदि श्रोतव्यइतिविधिस्स्यात् , नतावदयमपूर्वविधि , शक्तितात्पर्यावधारणरूपस्य तदनुकूलव्यापाररूपस्यच श्रवणस्य " द्रष्टव्य" इति विवक्षितवाक्यार्थज्ञानकारणताया लोकसिद्धत्वात् - असम्भावनाविपरीतभावनाविरहे गृहीतशक्तितात्पर्यस्य वाक्यस्या वधारणजनकत्वमपि लोकसिद्धमेव , तथा सन्निकृष्टविषये दशमस्त्वमसीत्यादौ वाक्यस्यापरोक्षज्ञानजनकत्वमपि लोकसिद्धमेव, तत्प्रत्ययेच परिपन्थिनि जाग्रति कमिपदाभावेच कथं दर्शनफलोद्देशेन विधि", दर्शनस्य विधानासम्भवादिति चेन्न । तत्सम्भवस्य स्थापनात् ।

यत्तु कैश्चिदुक्तं - आपातदर्शनमिव कृतिसाध्यत्वेनविधानार्हं प्रतिवाक्य मय मस्यवाक्यस्यार्थ इति सिद्धार्थोक्तिरूपेण गुरूपदेशेनान्तरशास्त्रस्थवाक्यार्थग्रहणमात्रं श्रवणम् । तच्चाज्ञानमात्रविरोधि , न तु मननमिव संशयादिविरोधि, मननरूप न्यायावतारांग संशयधर्मिज्ञानरूपत्वात । मननन्तु अयमेव वाक्यार्थो युक्तो नान्य इति निर्णयहेतु युक्त्यनुसन्धानम् । निरन्तर निध्यानं निदिध्यासनं । इत्थमेव श्रवणादीनां भेदः । विचारादिविधिस्च पूर्वविधि ब्रह्मज्ञान वेदविचारहेतुतायां अनुपलम्भात । नहि वेदार्थज्ञानाय वे विचार क

तव्यइति वचनव्यक्तिः; ब्रह्मज्ञानस्योद्देश्यत्वात् । नहि – ब्रह्मज्ञानाय ब्र
ह्मविचारः कर्तव्यइति, तथात्वे ब्रह्मणो विधेयविशेषणतया गुणत्वा-
पातात् । किन्तु – ब्रह्मज्ञानाय वेदविचारः कर्तव्यइत्येव वचनव्य
क्तिः । यद्यपि ब्रह्मपरवेदविचारएव ब्रह्मविचारः, तथापि न ब्रह्मवि
चाररूपेण विधानं, किन्तु वेदविचाररूपेण । तथाच श्रुतिः, " तस्मा
द्वेदं सर्ववेदानधीत्य विचार्यच ज्ञातुमिच्छेत् " इति । एवञ्च यथा घ-
टादौ वितरभेदे सिद्धेऽपि पृथिवीत्वोपहिते तदसिद्धेः पृथिवी इतरे
भ्यो भिद्यत इत्यत्र न सिद्धसाधनता । यथावा स्थानप्रकरणाधिकर
णोत्कर्षेण राजसूयान्तर्गतेष्टिपशुसोमेषु प्रतिप्रतिविकल्पचोदनस्य इति
कर्तव्यतालाभावधि राजसूयं तद्भावि । तथा वेदविचारत्वोपहिते ब्र
ह्मज्ञानहेतुताया अप्राप्ते रपूर्वविधिता । नहि कर्मकाण्डेन ब्रह्मकाण्डे
स्यान्तरङ्गकारणविचारस्येन पदवर्णस्वरादिना आपाततोऽपि ब्रह्मधीर
स्ति । यद्वा – निदिध्यासनस्य स्पष्टतरभावब्रह्मसाक्षात्कारहेतुता ना
न्यतः प्राप्तेति सुतरामपूर्वविधिः । तथा – अज्ञातादौ निदिध्यासना
सम्भवेन श्रवणमननयो र्नियमादेव प्राप्तावपि नियतविषयक निदिध्या
सनविषय गुणान्यगुणेषु लिङ्गेन तयोरप्राप्ते रताद्विविरण्यपूर्वविधिरेव ।
एतच्च श्रवणमननयो र्निदिध्यासितव्य गुणाङ्गे दृष्टद्वारेण अन्यत्र त्व
दृष्टद्वारेण निदिध्यासनाङ्गत्वेति ध्येयमिति ।

अत्रोच्यते – श्रवणेतावत् दुरुक्तानयो नान्तर्भावः, ' श्रोतव्य "
इत्यत्र तद्वाचक पदाभावात्, शाब्दे अयमर्थः इत्यादि बहुलप्र
योगात् " श्रोतव्य " इति शाब्दज्ञानमेव स्वरसतः प्रतीयते ।
" आत्मा श्रोतव्य " इत्यभिधानात्, आत्मनिच वेदान्तानामेव प्रमा
णत्वात् तस्य शाब्दज्ञानस्य वेदान्तजन्यत्व मवगम्यते । तत्र तर्क
स्यापि सहकारित्वात् मीमांसितवेदान्तजन्यत्व मवगम्यते । तस्य
गुर्वधीनत्व वाक्यान्वयाधीनमेव । एतच्चवदति " श्रोतव्य ' इति शा
ब्दज्ञानमात्र मात्रसमभिव्याहारलब्ध वेदान्तजन्य ज्ञानत्वा, नविधेय,
तस्याप्ययत्नसाध्यत्वासिद्धेः । नापि न्यायोपबृंहितवेदान्तजन्य ज्ञानं ।
षाड्गेनाध्ययनेन पाठमात्रेणापि पुरुषार्थ तत्साधनस्य जिज्ञासेः

पाठक्रमात् त्रिवर्गे प्रथमप्रावण्याच्च कर्मविचारे प्रवृत्तस्य निर्णयेन प्रतिबन्धकजिज्ञासापगमे रागादेव वेदान्तविचारे प्रवृत्ते । किञ्च-ध्यानस्य मोक्षसाधनत्वविधाने ध्येयावधारणस्य ध्यानसाधनत्वस्य लोकसिद्धत्वात् ध्यानार्थिन स्वतएव विचारे प्रवृत्ते नविचारस्यविधेयता । अतएव श्रवणद्वारावगत न्यायातिरिक्त साधक बाधक परिहारतद्विरुद्धार्थनिरासात्मक मननमपि श्रुतार्थ प्रतिष्ठात्मकत्वात् स्वतएव प्रवृत्ते नविधेयं । एतेन - पराभिमत न्यायमात्रानुसन्धानानकरमपि दत्तोत्तरं । ध्यानार्थिनो ध्येयावधारणे लोकतएवप्रवृत्तेः ।

यच्च विचारविध्यात्मकत्वाभिमतमननविधिसमर्थनं, तत्रवेदार्थज्ञानायवेदविचारः कर्तव्यइति वचनव्यक्तौ नकश्चिद्दोष । वेदपदेनवेदान्तानामेव ग्रहणएव वेदार्थतया उद्देश्यत्वाविरोधात्, वेदमात्रविवक्षायामपि नैव वचनव्यक्तौ दोष, विधित्वेसिद्धेहि सदोष, तदेववेदान्तविप्रतिपन्नं । अनुवादे त्वेव वचनव्यक्तावपि नदोष ।

यच्च - ब्रह्मज्ञानायब्रह्मविचार कर्तव्यइतिवचनव्यक्तौदोषउक्त सचतद्विरेवदूषितः । भगवत प्राधान्येनाग तद्दर्शनादि फलभूत प्रीत्यवच्छेदकत्वमेव, नान्यत्, अनिर्वचनात्, तत्र साधनभूतदर्शनाद्यवच्छेदकत्वेऽप्यविरुद्ध, एकस्यैव राज्ञः फलीभूतप्रीत्यवच्छेदकत्वेऽपि तत्साधनसेवादवच्छेदकत्व दर्शनात् । नहि राजसेवा राज्ञानवच्छिन्नप्रीतिहेतुः नचा स्वयं तदनवच्छिन्ना प्रीतिहेतुरिति । किञ्च - वेदस्या निदिध्यासितव्यत्वात् वेदार्थमात्रस्यच निदिध्यासनाङ्गीकारात् ब्रह्मनिदिध्यासनमेवविधेय, तदपिनस्यात् ब्रह्मणोऽनुगतत्वप्रसङ्गात् ।

यच्च ब्रह्मज्ञानायवेदविचारइति वचनव्यक्तिरिति । तन्न । तत्रवेदपदेनवेदान्तविवक्षायां नविधिसंभवः ब्रह्मजिज्ञासोः स्वात्मातिशयादेव वेदान्तविचारे स्वतएव प्रवृत्तेः, नचायमधिकारी ब्रह्मणे वेदान्तवेद्यत्व नजानातीति वाच्यम् । प्रधानादिव्यावृत्तिसन्देहेऽपि अध्ययनकालएव वेदान्तानांब्रह्मपरत्वावगमात् । अन्यथा " आत्मावाश्रोतव्योमन्तव्य" इत्युक्ते पुनस्तत्रागतविचारस्य वेदान्तविषयता, आत्मनोविचारं वप्रतिपादनात्, तत्र वेदान्तानामेव नामाण्यावधारणादि विचारस्य त द्विषयतामतीति'

ननु वेदपदेन वेदमात्रं विवक्ष्यते, अत्र वेदान्तविचारस्य ब्रह्मज्ञानहेतुतायाः प्राप्तत्वेपि नवेदविचारस्य प्राप्तेनेति चेत्, तत्र यदि कर्मविचारस्य ब्रह्मविचारहेतुताया अप्राप्तिं मन्यसे, तर्हि नब्रह्मविचारे विधि । सत्य, " श्रोतव्य " इति विधिसमर्थनमेव विवक्षितम् नतुब्रह्मविचारविधिसमर्थनमितिचेत्, किं कर्मविचारस्य तादर्थ्यं दृष्टद्वारा उताहदृष्टद्वारा ? नाद्य, अनिद्रे., विधिवैयर्थ्याच्च । न द्वितीयः । दृष्टद्वाराभ्युपगमेहि आत्मविचारस्य वेदविषयतास्यात् तद्विचारस्य तत्प्रमाणविषयत्वादिति, अदृष्टद्वारताभ्युपगमे " आत्मा श्रोतव्यो मन्तव्य " इत्युक्ते कोहि वेदस्यप्रसङ्ग. ।

ननु – वेदस्य आत्मप्रमाणत्वादेव वेदविचारो विधीयते, तदेकदेशद्वारा दृष्टार्थता, अन्यान्तरे त्वदृष्टार्थतेतिचेत, तथासति वाक्यस्या ऽप्रामाण्यात् वाक्यविचारत्वेन सर्ववाक्यविचारविधि प्रसज्येत । अपिचैवमेकदेशेनुवाद एकदेशेविधिरितिस्यात्, एकार्थैकदेशेविध्यन्वयोरनुपपन्नश्च । यदिच ब्रह्मविचारस्यापि वेदविचारत्वेन येषेण ब्रह्मविचारहेतुत्वेना प्राप्तिम्मन्यसे, तत्रकिं वेदान्तवेदत्व नावगत ? अवगतमेव तस्यवेदत्व तद्विचारे वेदविचारत्वञ्च, किन्तु वेदविचारत्वावच्छेदेन कारणत्व नावगतमितिचेत, किं सर्वविचाराणा कारणत्व नावगतमिति मन्यसे ? तर्हि सर्वविचारकारणता बोध्या तत्रैवदान्तविचारे ऽनुवादो दुष्परिहर ।

ननु – वेदविचारत्वस्य कारणतावच्छेदकत्व मनवगतमितिचेत्, तथासति वेदविचारत्वेन कारणत्वबोधन स्यात । नच श्रोतव्यवाक्यस्य तथाविध सामर्थ्यं पश्याम । नापि 'तस्मादेव" मिति वाक्येनतथाविधि, " सर्ववेदान्तिन्याये ' इत्युक्ते नहि सोर्थःप्रतीयते,किन्तु सर्वेषां विचाराणां तत्तत्प्रातिस्विकरूपेण साधनत्वम् ।

ननु – सर्ववेदविचारत्व कारणतावच्छेदकत्वेन बोध्यत इतिचेन । अतीतानागतव्यविकरणविचाराणा कारणत्वासम्भवेना योग्यत्वात् । सर्वस्य वेदविशेषणत्वे सर्ववेदसम्बन्धिन एकस्य विचारस्याऽलाभात् । सर्ववेदसम्बन्धिनो ये विचारा इत्युक्तेतु प्रातिस्विकरूपेण तत्तद्वाक्यविचारकारणतार्थपर्यवसानात । तत्तद्वाक्यविचाराणा मनुवाद

कारणं बोध्यतइति चेन्न । सर्वांवस्य वेदविशेषणतया श्रुतिवाक्यं वि चारलभेपि विचारसमुदायबोधक पदाभावात् । दृष्टान्तश्च विषमः, पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिपक्षे तादृशोद्देश्यप्रतीतिजनन- सामर्थ्यं मस्त्येव, इहतु त्वदुद्देश्यप्रतीतिजननसमर्थं किमपि वाक्यं न दृश्यत इत्युक्तमेव । राजसूयदृष्टान्तश्च विषमः, तथाहि - राजसू ये बहव इष्टिपशुसोमयागा स्वर्धे फलवन्तः समप्रधानाः, तत्राभिषेचनी योनाम सोमयागः, तत्सन्निधौ विदेवनादय स्समाम्नाताः, ते किं स र्वस्य राजसूयस्यांग उताभिषेचनीयस्यैवेति ? यदि सन्निधिर्बलीयान् अभिषेचनीयांगं, अथ प्रकरणं ततो राजसूयस्येति । तत्र सन्निधिविशे षादभिषेचनीयांगत्वे प्राप्ते - अभिधीयते; प्रकरणाविशेषात् सर्वार्थता । नन्वभिषेचनीयस्याप्यस्त्येव फलवत्त्वात्प्रकरणं; यद्यप्यस्ति तदप्यन्ये पामप्यस्तीति तादर्थ्यमपि युक्तं । यदि चपरमविशेषतस्सर्वेषामाकां क्षायामपि पाठसन्निधिविशेषादभिषेचनीयस्य विशेषत आकांक्षा क- ल्पिता तादर्थ्यं स्यात् ततश्च विप्रकर्षे, सर्वार्थताऽपि कल्प्याकांक्षा तस्सुख गम्यते, अभिषेचनीयस्य त्वाकांक्षा कल्पनीयेति । एतेनाग्नेयादी नां धर्मसाधारण्यमपि व्याख्यातमिति । इह सन्निधेः प्रकरणस्य ब लवत्त्वं मुपपाद्यते, नतु तत्राकारान्तरेणाकांक्षानिवृत्ता क्वचि- दाकारान्तरेणाकांक्षाप्युपपाद्या । यद्यपि शास्त्रदीपिकायामुक्त - " अभिष नीयस्यभिषेचनीयस्य प्रकरणं, प्राकृतैर्धर्मैराकांक्षापूरणात् । नन्वन्येषामपीष्टिपशुसोमानां विकृतित्वान्नास्त्येव प्रकरणम्, सत्यम्; प्रातिस्विकरूपेण नास्ति राजसूयसमवायस्त्वस्त्येव, कथं, श्रुत्यादिविहि तांगसम्बन्धात्तदंगेन निवृत्ताप्याकांक्षा पुनरुत्थाप्यते, पवित्रादारभ्यदश पेय प्रतिप्रसवविधिषु प्रायेण 'राजसूयायपशूनालभते, राजसूयेनेजा नस्य धर्माः पुरोडाशा' इति राजसूयपरामर्शात्तावन्तं देशमनुवृत्ते राजसूयकथंभा वप्रकर्षेण तन्मध्यपतितानि विदेवनादीनि गृह्णातु" मिति तत्रापि राज सूये प्रकरणाभावमाशंक्य सन्दंशन्यायात् समर्थने तात्पर्यम्, नाप्या कारान्तरेण धर्मप्राप्तावप्याकारान्तरेणाप्राप्ते साकांक्षाप्रतिपादने ता त्पर्यम्, तथासति किं मुख्याविनाकांक्षोपशमनेनाकारान्तरेणास्यात्

किंवा स्वारसिकाकांक्षाप्रयोजकत्वेन? नाद्यः अतिदेशिकांगान्वयेन निराकांक्षत्वे प्यौपदेशिकांगान्वयार्थं तेनैवाकारेणाकांक्षोत्थापनस्य बहुशो दर्शनात्। नद्वितीयः मन्त्रप्रबन्धेननिवृत्ताप्याकांक्षा पुनरुत्थाप्यत इत्युक्तिविरोधात्। राजसूयात्मना स्वस्यैवेतितु विदेवनादीनां समुदायान्तःपातित्वसिद्धान्तसिद्ध्यर्थं समुदायाकांक्षाप्रतिपादनपरम्। किंच वेदान्तविचारांशे लोकतएव प्रवृत्तिसिद्धे स्तदंशे नविधेः प्रयोजकत्वं, किन्तु पूर्वभागविचारांशएवेति, विधे र्विचारैकदेशप्रयोजकत्वमस्वरसमापद्येत। अनेनैव यद्वेत्यादिकमपि दत्तोत्तरं। किंच किमात्मा श्रोतव्य इत्यत्रात्मशब्दो निदिध्यासितव्य गुणेतरगुणे व्युत्पन्नः, येनैवं ब्रवीषि, तथासति निदिध्यासितव्यगुणानां विचार्यता न स्यात्। सामान्यत स्सर्वगुणा विवक्षिताइति चेत; तर्हि निदिध्यासनस्यापि सर्वगुणविषयत्वादस्यैवात्मशब्दस्य 'निदिध्यासितव्य" इत्यत्राप्यनुषंगणार्थं वैरूप्यायोगात्।

यत्तु- कैश्चिदुक्तं,"द्रष्टव्यश्श्रोतव्य" इत्यादयो दर्शनादीनां विधायकाएव। "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विज्ञात" मित्युपक्रम्य तदुपसंहारे" एतावदरेखल्वमृतत्व" मिति एतावच्छब्देन प्रकृतदर्शनादिचतुष्टय परामृश्य तस्य लांगलं जीवनमिति वत्साधनेसाध्योपचारेण विशेषेणामृतत्व साधनत्वप्रतिपादनात्। दर्शनादयश्च दर्शपूर्णमासाभ्यामिति द्वन्द्वेनेव "एतावदरेखल्वमृतत्व" मित्येतावच्छब्देन परामृष्टतुल्यवत्फलसम्बन्ध प्रतिपादनात् समप्रधाना। ननु श्रवणादीनां पूर्वपूर्वस्य उत्तरोत्तरद्वारैव मोक्षसाधनत्वात् न समप्राधान्यमुपपद्यतइति चेत्; एतावदित्यादिभिश्श्रवणादीनां दर्शनवन्मोक्षसाधनत्वे सिद्धे आधानवदुपकारकत्वेपि प्राधान्याविरोधात्। यद्यप्यसाक्षात्कृत स्वर्गादिभावनायाइव स्वव्यक्तस्वभावब्रह्मनिदिध्यासनस्यापिताद्दशब्रह्मसाक्षात्कारहेतुतानलोकतःप्राप्ता,तथापि तस्यमोक्षोजनयितव्ये दृष्टसन्निहित परमात्म दर्शनद्वारकत्व संभवे अदृष्टद्वार कल्पनस्य अन्याय्यत्वेन दृष्टपरमात्मदर्शनमेव द्वारं कल्प्यते। अतो नाकृतनिदिध्यासनस्यापि परमात्मसाक्षात्कारप्रसंगः, तत्तदधिकार्यनुसारेण नियत तत्तद्गुणवत्तया परमात्मध्यानविध्यपेक्षित तत्तद्गुणत्वावधारणाय फलव

इत्यर्थावबोधपर्यन्ताध्ययनविधिना तत्तद्गुणवत्त्वविषयक श्रवणमननाक्षेप सम्भवेऽपि तदन्यगुणविषयक श्रवणमननाक्षेपासम्भवेन नियतविषयक ध्यानात्मक निदिध्यासनविषयगुणान्य गुणवत्त्वविषयक श्रवणमननयोरप्राप्ततया "श्रोतव्योमन्तव्य" इतिविधेरप्यपूर्वविधित्वं । तत्र श्रवणस्य मोक्षजनयितव्ये दृष्ट सन्निहितंच मननमेवद्वारं, मननस्यतु मोक्षजनयितव्ये ध्येयान्यगुणांशे अदृष्ट ध्येयगुणांशेतु ध्यानोपकारकत्वमपीति ।

केचित्तु- श्रवणमननयोर्नविधि, अर्थावबोधपर्यन्ताध्ययन विधितएवतयोः प्राप्तेः, अतस्तयोरनुवादः, निदिध्यासनस्यतु मोक्षजनयितव्ये दृष्ट दर्शनं द्वार, दर्शनत्वदृष्ट द्वार। नचैव मोक्षं प्रत्येवादृष्टं द्वारमस्त्विति वाच्य । मोक्षं प्रति द्वारकल्पनादशाया मदृष्टस्यानुपस्थितत्वादिति।

अत्रोच्यते यदुक्त "एतावदरेखल्वमृतत्व" मित्यादिना चतुर्णां मोक्षसाधनत्वेन विधानमिति । तन्न । प्रयोजकत्वमात्रेण तत्र सामानाधिकरण्योपपत्तेः । लांगल जीवनमितिवत् । नहि लांगल साक्षाज्जीवन हेतु, अपितु कर्षणादिव्यापारव्यवधानेनैव । निदिध्यासने मोक्षार्थं विहिते लोकसिद्धतत्साधनभावयो. श्रवणमननयो र्लोकतएव प्रवृत्त्युपपत्तौ तथात्वकल्पनादिव गुरुभूतविधिव्यापार कल्पनानुपपत्ते. ।

यदुक्त निदिध्यासनस्य दृष्टपरमात्म दर्शनद्वारकत्व कल्प्यत इति । तन्न । 'स्मृतिलम्भेसर्वग्रन्थीनां विप्रमोक्ष." "तस्मिन्दृष्टेपरावरे" "भिद्यते हृदयग्रन्थि" रित्युभयत्रापि तुल्यवन्मोक्षसाधनत्व प्रतिपादनात् । दृष्टद्वारत्व सम्भवे तदग्राह्यमितिचेन्न । त्वयैव तदसंभवस्योक्तत्वात् । नहि निदिध्यासनस्य पक्तत्वभाव ब्रह्मसाक्षात्कारहेतुतान्यतः प्राप्तेति शक्यवोच । तज्जन्यस्यादृष्टस्यापि तत्स्वरूप दृष्टमितिचेन्न । यत्तज्जन्य तत्फलजननयोग्यत्व एष्यते तत्र लोकव्यापप्रवृत्ति, दृष्टमेव अवहननस्य तुषविमोकसाधनत्वं, तुषविमोकश्चर्यापण पुरोडाशादिषु । अन्यत्र नैतन्न्याय प्रवृत्तिसम्भव । अदृष्टकल्पना भीत्या दृष्ट द्वार कल्पयत स्तदर्थं पुन रदृष्टकुदरकल्पना पातात् । दृष्टद्वार कल्पनादशायां नतदुपस्थितिरितिचेन्न । दृष्टद्वारत्वेन कल्प्यते, मन्दरूपेण, तथाकल्पनायाश्च तदन्यादृष्टोपस्थितिरनिवार्या ।

तस्माज्ज्ञानभक्तिनत्पश्चात्मक मेकमेवज्ञानं मोक्षसाधन मित्यनुगृह्णन्ति वेदान्तरहस्यवेदिनः । अस्तुतर्हि नियमविधिः । यद्यप्यात्माविचारितवेदान्तैरेव ज्ञातव्य इति वेदान्तनियमोनसंभवति । आत्मनि वेदान्तातिरिक्त प्रमाणाप्रसक्ते र्व्यावर्त्याभावात् । नच लौकिकतुपनिषृत्ता वुपायांतरवदलौकिकात्मज्ञाने मनःप्रमाण प्रसक्तमितिवाच्यं । सिद्धान्ते मनसोऽप्रमाणत्वात , उपादानतयातस्यतज्ज्ञेनाप्यपेक्षित त्वात् । नाप्यनुमानं,"नैषातर्केण" ति निषेधशास्त्रादेव तत्सिद्धेः । श्रुतिसमान विषयस्य तस्य"मन्तव्य" इति श्रुत्यैव सहायत्वेनांगीकारात ; भिन्नविषयस्यतु विवक्षित श्रुत्यर्थे प्रकम्पनसत्वेत नंनिवर्त्य वं । नापि पुराणवाक्यं व्यावर्त्यं ; " इतिहास पुराणाभ्यां वेदं समुपबृंहये " दिति तस्यापि वेदार्थज्ञानोपाय त्वोपगमात् । नाप्यात्मविषय प्राकृतगाथा व्यावर्त्या , नम्लेच्छित वाक्यादमुमुक्षूणामधि वेदाधिकारिणां तस्या निषिद्धत्वात । नापि वेदान्तानां विचारेणैवात्माज्ञातव्य इति विचारनियमो प्युपपद्यते । तत्रापि व्यावर्त्याभावात् । नच-गुरुमुखं श्रवणं नियम्यतइति वाच्यं । "तद्विज्ञानार्थ"मिति ज्ञानार्थं गुरूपसदनविधिनैव स्वतन्त्रश्रवणस्य व्यावृत्तत्वात , अन्यथा तद्विधेरदृष्टार्थतापत्तेः । नचा विचारित वेदान्तवाक्यं व्यावर्त्यम् । तन्मात्रा न्निर्णयानिष्पत्तेः । नापि मुमुक्षूणां मोक्षसाधनज्ञानायात्मैव श्रोतव्य इत्यात्मा नियम्यते, आत्मनोऽन्विष्येयत्वात, अनात्मविचारस्य मुमुक्षुजिज्ञासितात्म ज्ञाना.नुपायत्वेनस्वतएव प्रसक्त्यनुपपत्तेः । तथापि मुमुक्षूणा मद्वैतात्मविषय वेदान्तविचारो नियम्यते. तदात्म शब्दस्य " इदसर्वं यदयमात्मा" " आत्मनिविज्ञाते सर्वमिदं विज्ञात " मित्येवमादि तत्प्रकरणस्थ वाक्यपर्यालोचनया अद्वितीयात्मपरत्वात्, द्विता मविषयवाक्यश्रवणं व्यावर्त्यते, ततो मुक्त्यसंभवात । नन्वेवन्मुमुक्षुः स्वतो निवृत्तइति वाच्यं; आपातप्रतीतिदशायां द्वासुपर्णे' त्यादि वाक्यात् " जुष्टंयदापश्यत्यन्यमीशमस्यमहिमानमिति वीतशोक " इति भेदज्ञाना च्छोकनिवृत्ति प्रतिपादनात्

दुरितसाक्षात्कारार्थिनो विचाराविषयभावनियमेन ततो निवृत्त्यसंभवात् । नच आपातप्रतीतिदशायां " उदरमन्तरं कुरुते " इत्यादिवाक्यात् भेदज्ञानस्यानर्थहेतुत्व प्रतिपत्तेर्मुमुक्षो स्तत्र प्रतिपत्तिरितिवाच्यं, " तस्माद्देकाकी बिभेति " इत्यभेदज्ञानेपि तद्दशायां भयप्रतिपत्तेः । " नान्योतोस्तिद्रष्टे " तिभेदनिषेधश्च आत्ममात्रभेदविषय ईश्वरभेदनिषेधविषयो वेति न तदा निश्चेतुं शक्यते । तथाच यथा " व्रीहीनवहन्ती " त्यादौ दृष्टपुरोडाशहेतुभूत तण्डुलनिष्पत्तिमात्रस्य साधनान्तरसाध्यत्वे ऽप्यपूर्वजनकत्वादेः यद्वननियम्यते , एवमत्राप्यात्मज्ञानमात्रस्य तर्कितसाधनान्तरसाध्यत्वयोग्यताया मपि अविद्यानिवृत्तिसमर्थो द्वैतात्मज्ञानसाधनीभूत वेदान्तश्रवणं पक्षे अप्राप्तं विधीयते , अर्थाञ्च प्राग्विधिप्रवृत्तेर्नखविदलनादिव क्रमगृहीत साधनान्तरव्यावृत्तिः । ततश्च भेदप्रवणचित्त स्तच्छास्त्रेपि कदाचित्प्रवर्तेत, तन्माभूदिति दयावतीश्रुतिराह " आत्मावा अरे द्रष्टव्य श्रोतव्योमन्तव्य " इति। नच यस्तुनोयत्साधनं तदेवव्यावर्त्यमिति नियमः, किंतु यद्व्यावृत्तिं बोधन विना नियम्यमानस्य पाक्षिक्यप्राप्तिर्न निवर्तयितुं शक्यते , तत्तदा निवर्त्यं , लौकिकतुषविमोकेपि नखविदलनादे र्वस्तुतस्साधनत्वाभावात् , तज्जातीयसाधनत्वन्तु प्रकृतेपि, शरीरातिरिक्तात्मज्ञानमात्र भेदशास्त्रस्यापि साधनत्वात्, स्वातन्त्र्येण पुराणादावपि प्रवृत्तिर्वा निवर्त्येति केचिदिति ।

अत्राभिधीयते , आपातप्रतिपन्नवेदार्थं प्रति न नियमः , आपातप्रतीतिदशायां कुत्रापि प्रवृत्त्यसंभवात् । नच कृष्यादाविव प्रवृत्तिः । " मृत्योस्सम्मृत्युमाप्नोती " त्यादिना ऽनर्थश्रवणात् । नच - कृष्यादावनर्थ प्रतीतिः, किंतु फलाभावशंकामात्रमेव । नच गृहीतभेदतात्पर्यकवेदान्त प्रति नियम , तेनास्यापि भेदतात्पर्यस्यैव ग्रहेणतेनमन्यस्य वाक्यस्य त्वदुक्तार्थबोधकत्वासिद्धेः । नच - गृहीताभेदतात्पर्यकवेदान्तंप्रति, विचारादेव तात्पर्यावधारणेन निर्णेतविचारप्रति नियमविधिर्निष्प्रयोजन , त्वदुक्ता नानन्तरितयनेदान्ततया आत्मशास्त्रा

यदुक्तं भ्रमगृहीतसाधनत्वव्यावृत्त्यर्थमेव नियम इति अस्त्येवं तथापि विधि नियमेन विना भ्रमनिवृत्तिर्न स्यात् तदा हि नियमः स्यात् । अत्र नियमेन विना साधनत्वभ्रमो विद्वज्जनादेर्निवर्तते, इह तु नियमाभावेपि न्यायानुगृहीतैर्ज्ञानस्य मोक्षसाधनताप्रतिपादकवाक्यैः ज्ञानस्याद्वैतविषयस्यैव मोक्षसाधनताप्रतिपत्तौ कथं द्वैतज्ञानस्य मोक्षसाधनत्वभ्रमः । वस्तुतस्तु यदि भ्रमगृहीतसाधनत्वव्यावृत्त्यर्थो नियमः स्यात्, तदा ' उरुप्रथस्वे ' ति मन्त्रस्य प्रथनप्रकाशनत्वलिङ्गेन पुरोडाशप्रथने विनियोगे मन्त्रान्तरेपि प्रथनप्रकाशनत्व लक्षणलिङ्गभ्रमात्तस्यापि तत्रैव विनियोगभ्रमे तद्व्युदासार्थं प्रकाशन लक्षण कार्यस्य एकेनैव मन्त्रेण सिद्धौ मन्त्रद्वय वैकल्पिकमेवेति बुद्धौ सत्यां " उरुप्रथस्वेति पुरोडाशं प्रथयती ' ति तदर्थं ग्राह्य मन्त्रान्तर निवृत्त्यर्थं नियमविधिर्न्वरस्यात्, नानुवादः । किञ्च भ्रमगृहीतसाधनत्वव्यावृत्त्यर्थं नियमवदन्यपायाश्चापक्षान्तराणि निराक्रियन्ते कथं । पूर्वभागस्यापि " सर्वे वेदा यत्पदमामनन्ति " त्यादिना ब्रह्मणि प्रामाण्यभ्रमान् वेदान्तनियमो युज्यतएव । ' नैषा तर्केणे ' ति श्रुत्यनुसन्धाने अनुमानस्यापि निवर्त्यत्व युज्यतएव । 'नःखेच्छितत्वा" इत्यादिवाक्यस्य तदर्थस्फुरणदशायां प्राकृतगाथयाप्यर्थावेपि न हानिः । किञ्च निषिद्धानुष्ठानेन दुरितापूर्वोत्पत्तावपीष्टलाभस्याप्यनिवारणान्नियमेन विनान निवृत्ति । किञ्च ' नःखेच्छितया" इति गाथोच्चारणस्य निषेधेपि तद्विचारस्य न निषेध । तथा गुरूपसदनस्यादृष्टार्थत्व भ्रमवतो गुरुमुखश्रवणनियमे याकाहानि । तथा विरोधास्फूर्तिदशाया विचारितवाक्यादपि निर्णयोत्पत्ते रविचारितवेदान्तव्यावृत्तौ का हानि का? तस्मात्त्वदुक्त पक्षश्शङ्कितुमप्यनर्ह । यद्यपि त्वद्दूषिताः पक्षा अग्राह्याः । तथ्यपरोक्षसाधनान्तरस्याव्यावर्त्यतयैव निरस्ता ।

एतदुक्तं भवति, किमुत्पन्नमप्यवधारणनियमादृष्टाभावान्निवर्तेत? उत नियमादृष्टाभावात् अवधारणमेव नोत्पद्यते? आद्ये मोक्षस्यादृष्टसाध्यत्व प्रसङ्ग । द्वितीयेत्वनुभवविरोधः । इतरनिरपेक्षोपदेशादिनाप्यवधारणं जायतएव । अपरोक्षार्थविषयत्वात् त्वद्रीत्याऽपरोक्षमेवेति । एवञ्च यदि तृणारण्यादिरूपानुगतकारणे अननुगता शक्ति कारणतावच्छेदक

मेनेति परिशेषात् कर्मविचारस्य पूर्वत्वसिद्धिः । यदा तु कर्मपूर्व
विचारिन तदा "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्" इ
त्यादिश्रुतिसिद्धप्रकारेण नब्रुभुत्साप्रभवतीत्यतोपि क्रमनियम इति क
र्मविचारस्य पूर्ववृत्तत्वमवश्याश्रयणीयम् । एवं रागप्रधानश्रवणपक्षेऽपि क्र
मसिद्धिः, रागोऽपि हि सांगाधीतसशिरस्कवेदस्य पापप्रतीत स
र्ववेदभागार्थस्य कर्मब्रह्मभागयोरविशेषेण सातिशयनिरतिशय समस्त
पुमर्थप्रतीतौ बुभुत्साप्यविशेषेण प्रवर्तते क्रममपेक्षमाणस्त्वा
ध्यायानां सर्वेषां प्रायशः कर्मोपदेशकत्वात् सावकाशत्वात् मुख्यक
मानुरोधेन स्वाध्यायेतिकर्तव्यताभूतमीमांसाक्रमं प्रत्युत्थान "का
ङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः । क्षिप्रं हि मानुषे लोके सिद्धिर्भ
वति कर्मजा" इति न्यायेन त्रिवर्गप्रधानप्रदानप्राचुर्य [illegible] चापे
क्षमाणः; "यज्ञेन दानेने"त्यादिना यज्ञाद्यङ्गकोपासनविधौ यज्ञादि
ष्वन्तेषु यज्ञादिकर्मस्वेव पदार्थभूतयज्ञादिस्वरूपाधिगम सापेक्ष
या पूर्वमेव कर्मविचारापेक्षं पश्यन् ब्रह्मविचारागभूतकर्मसङ्कर्ष
तया ब्रह्मदृष्टिरूपतया च शारीरकेऽनुप्रवेशसंगतस्योद्गीथादेश्च कर्मा

---

यकर्तव्यतायां ब्रह्मजिज्ञासोत्थापकत्वेनोपजीव्यत्वात् कर्मविचारस्य पूर्ववृ
त्तत्वमित्याह ( यदा त्विति ) प्रसंगादाह ( रागेति ) ( मुख्यसंगत-
स्येति ) अनेनप्रासंगिकापेक्षितत्वमात्रेण यद्यंग पूर्ववृत्तत्वनियमोऽनु
क्तः, साक्षात्संगतस्य तत्सापेक्षत्वे हि तथा स्यात्, अथशब्दे प्रति
ज्ञातार्थापेक्षया पूर्ववृत्तत्वं हि प्रतीयते, नच प्रसंगसंगतोऽर्थः प्रतिज्ञा
विषय इति निरस्तम् । प्राप्यत्वेन प्रापकत्वेनच प्रतिपन्नस्य ब्रह्मणस्त
थैव जिज्ञास्यत्वात्, तेनैव रूपेण विषयतया उपास्यस्य तदुपयुक्ता
नां च प्रापकप्रतिज्ञान्तर्भावेण उपासनार्थकर्मसमृद्ध्यर्थोद्गीथादिनामपि सा
क्षात्संगतत्वात् । नचैवं कर्मनिरूपणमपि शङ्कनीयं । कृतत्वप्रस
ङ्गात् । ननु तर्हि कर्मसमृद्ध्यर्थत्वादुद्गीथादेः पूर्वकाण्ड एव निरूपणस्या
दित्यत्राह ( ब्रह्मदृष्टीति ) ब्रह्मज्ञानविना तन्निरूपणं नसम्भवतीति भा

प्रागुक्तनयेनक्रमश्च । गुणप्रधानभाववैपरीत्यमेव तु भवता साधितं । ब्रह्मविदस्तु तच्चिन्तयाक्षोपयोगस्सम्मतो । कर्मविद्वचस्तदुपदेशस्योपयोगइतिचेत्तर्हि कर्मापि चिन्तयेदविशेषात् । अथ विविदिषार्थकर्मसाद्गुण्यसिद्ध्यर्थमिति पश्यसि, तत्राप्यनुपयोगएव - विविदिषाया जातायामेव श्रवणे प्रवृत्ते, तत्रापि पूर्वकर्मोपदेशार्थत्वायोगात् । कर्मणाञ्च वेदनाङ्गत्वस्य प्रागेव स्थापितत्वात् न विविदिषाङ्गकर्मविदि । ब्रह्मविद्याम्य पृथक्करणमेव प्रयोजनमिति चेन्न, तस्यैकानिरूपणासाध्यत्वात् , तथाचान चिन्तनस्यादर्शनात् प्रकारा

---

धत्वात् कर्मब्रह्मविचारयोरैकशास्त्र्य सिद्ध्यतीत्यर्थः । नैतावदेव , अनिष्टान्तरमपि तव सिद्ध्यतीत्याह ( मागिति ) पैकशास्त्र्येसति कमाकाङ्क्षाया मुख्यक्रमानुरोधादिन्यायेन कर्मापि सिद्ध्येदित्यर्थः । बाधकान्तरमप्याह ( गुणप्रधानेति ) ब्रह्मोपसर्जनतया हीतरेषां निरूपणमुचितं , त्वयातु ब्रह्मणएव इतरोपसर्जनतया निरूपणमुक्तमित्यर्थं । त्वदिष्टं किमपि न साधितमित्यवधारणार्थं । एवमनिष्टप्रसङ्गात्त्वयैव मुपयोगो वक्तुं न शक्यतइति स्थितम् । एवं मुपयोगमात्रेण सप्रयोजनत्वमङ्गीकृत्योक्तं, इदानीं मिथोपयोगाभावे एतदधिकारिणस्तत्र प्रवृत्त्यसम्भवादिह तन्निरूपणं नस्यादित्याह ( ब्रह्मविदस्त्विति ) ( कर्मापीति ) ब्रह्मविदिति शेषः । यदिच मोक्षसाधनश्रवणादिव्यासक्तस्य मुमुक्षो स्तदसम्भव इति मन्यसे, तर्ह्युद्गीथादिचिन्तायामपि तुल्यमिति भाव । ननु - स्वस्य विविदिषाया जातायामपि परस्य विविदिषोत्पादनाय तदर्थकर्मसाद्गुण्यार्थत्त्वमत्युपदेशाय उद्गीथादिचिन्तनमित्यत्राह ( 'तत्रापीति ) कर्मणोपि विचारप्रसङ्गादित्यर्थं । ( न विविदिषाङ्गकर्मसिद्धिरिति ) विद्याङ्गकर्मसमृद्ध्यर्थं तु त्वया नेष्यत इतिभाव । एवमिथोपयोगे वाच्ये साक्षात्सङ्गतिरेवेति स्थित । नचैव प्रसङ्गसङ्गत्युच्छेदः । कर्मविचाराधिकार्युपयोगितयैव शेषलक्षणे सङ्गतस्याप्यौपादानिकदोषस्य प्रयुक्तप्रसङ्गे चिन्तनात् ।

न्तरेष्वनु बहुशोऽत्र तासां चिन्तनात् । एवं कर्मविनिरूपणे ब्रह्मवेदनापेक्षणात् ब्रह्मनिरूपणे च कर्मवेदनं सापेक्षत्वात् अन्यतरविदोऽशक्यनिरूपणासूद्गीथाद्युपासनादिद्वयं चिन्तनावकाशइति फलितं । शारीरके च ब्रह्मस्वरूपनिरूपणानन्तरमेव तच्चिन्तनं सूत्रितं । तस्मादत्रैव साक्षात्सङ्गतस्य तच्चिन्तनस्य प्रधानोपयोगापेक्षाया अङ्गभूतकर्मसमृद्धिद्वारा ङ्गिनो वेदनस्य शीघ्रनिष्पादनं नाम महानुपयोगः । तदप्याह " तान्यपि कर्माण्यनभिसंहितफलानि ब्रह्माविर्भावापादकानीति तत्साद्गुण्यापादकान्येतानि सुतरामिहैव सङ्गतानी" ति । किंच " अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् । इष्टस्यार्थस्य संसिद्धौ को विद्वान्यत्नमाचरेत् ॥ " इतिन्यायात्कर्ममात्रेण चेदमृतत्वं लभ्येत क पुनः कर्माङ्गकात्कर्मसमुच्चिताद्वा ज्ञानादमृतत्वं लिप्सेतेत्येतदप्युक्तं प्रागेव । अतोऽपि कर्मण्येव प्राक्प्रवृत्तिः - कर्मणि तु निरूपिते न्यायपरिश्रान्तचेतास्तयोत्तरोत्तरातिशयितं कर्मविधानादि-

---

हेत्वन्तरेणापि साक्षात्सङ्गतिं साधयति ( एवमिति ) विचारद्वयस्यापेक्षतया पृथङ्निरूपणीयस्यास्य ब्रह्मचिन्ताया निरूपणं तत्रैव साक्षात्सङ्गतिं द्योतयतीत्यर्थः । ननु प्रसङ्गादपि तत्र तन्निरूपणोपपत्तेः कथं साक्षात्सङ्गतिरित्याशङ्कानिरासाय ब्रह्मस्वरूपनिरूपणानन्तरमेवेत्युक्तम् । यदि ह्युद्गीथादिचिन्ताप्रसङ्गतस्स्यात्तदा ब्रह्मविद्यानिरूपणानन्तरं स्यात् , सा तु ब्रह्मविद्याभ्यः प्रागेव ब्रह्मनिरूपणानन्तरं क्रियत इत्यर्थः । साक्षात्सङ्गतौ वा कथमिहोपयोग इत्यत्राह ( प्रधानेति ) नित्यफलेच्छायामपि कर्मण एव पूर्वकृतत्वमित्याह ( किंचेति ) ( संसिद्धाविति ) प्रयत्नेनेति शेषः ( कर्ममात्रेणेति ) आपातप्रतीतिदशायां सन्नाप्यक्षयफलत्वप्रतीतेः स्वर्गेभ्यः कामेभ्य इत्यादिना सर्वान्तर्भावेण मोक्षफलत्वप्रतीतेश्चेति भावः । ( न्यायपरिश्रान्तेति ) सम्यगभ्यस्तन्यायतयेत्यर्थः ( उत्तरोत्तरेति ) प्रयत्नतारतम्यात्फलतारतम्यसिद्धिः , तथा स्वरूपतः प्राप्ततोऽथवा वाच्यम् , तथाऽऽवृत्तिविधानादपि तत्सिद्धिः

भि कर्मणामल्पास्थिरफलत्वमवसाय तत्सवादकानिच " परीक्ष्य लोका " नित्यादीनिवाक्यानि प्रागापातयोजनकान्यपि निरूपित सवादायथाश्रुतार्थानि सामान्यतो निश्चित्यानन्तस्थिरफलस्य केवलक मभिलष्यता मया प्राचीन कर्मोपस्कृतज्ञानसाध्यानन्तस्थिरफ लापातप्रतीत्या प्रतिबन्धकरहितया सञ्जातमुमुक्षातिशय शारीरक शास्त्रमारभतेति स्थितमेतत् । कथञ्च नित्यानित्यवस्तुविवेकसिद्धये शा स्त्रान्तरावकाश , प्रागुपनयनात् कामचारवादभक्षितया यथोपल म्भकुक्षिभरेर्नालस्य शास्त्रान्तरान्तरावकाशोपि नास्ति , उपनीतस्य

---

रित्यर्थ । ( निरूपितेति ) अनित्यत्वप्रतिपादकशास्त्र निरूपणसवा स्नित्यादिशास्त्राण्यपि यथाश्रुतार्थएव न्यायसवादीनीति सामान्यतो निश्चित्येत्यर्थ । अत्र निश्चयशब्देन समानकोटिकसशयविरोधित्व वि वक्षितम् । एतन्निश्चयानन्तर मुक्टकोटिकएव सशयो भवति नतु समानकोटिकइति भाव । तेन नापातप्रतीत्येति वक्ष्यमाणविरोध । ( प्रतिबन्धकरहितयेति ) उक्तरीत्या प्रथमभाविनी कर्मजिज्ञासानिवृत्ते ति भाव । ( मुमुक्षातिशयइति ) पूर्वोक्तसामान्यनिश्चयो तिशयहे तु । एव नित्यानित्यवस्तुविवेकस्यौपदेशिकत्वे पूर्वतन्त्रस्यौपदेशिकत्व सम्भवाद्विचारवैयर्थ्यमुक्त्वा विधिबला द्विचारमाश्रित्य विषयीका र्यपि कर्मणएव पूर्ववृत्तत्व स्यादित्युक्तमसङ्गाङ्गप्राप्तिपक्षेपि क्रमनि यम उपपादित । एव मौपदेशिकनित्यानित्यविवेकपक्षो दूषित । शास्त्रजन्यनित्यानित्य विवेकपक्षे दोषान्तरमाह ( कथचेति ) ( काम चारेति ) ततश्च यथेच्छाचारिणो ह्यनुपनीतस्य अलौकिकपुरुषार्थेच्छा विरहेण तदर्थ प्रवृत्तिर्न सम्भवति । नच – शास्त्रान्तरप्रवृत्ते. काम चारान्तर्भाव । बह्वायाससाध्यत्वात् । नच – ख्यात्याद्यर्थ प्रवृत्तिसभव , बाल्यमति तस्य पुरुषार्थत्वासिद्धे , तादृशपुरुषार्थोपि तस्य प्रसिद्धका मचारादावेव , एतदभिप्रेत्यैव तस्य भोजनैकप्रयोजनकत्वमुक्त, ( य- थोपलम्भकुक्षिम्भरेरिति ) ननु कर्मविचारानन्तर अध्यापकाभावादिना

वेदाध्ययने नियुक्तत्वात् अधीतवेदस्यापि तदर्थविचारे विधिना रा गेणवा प्रेरितत्वात् तयोश्च विज्ञातिलक्षणीश्रवणमन्तरेणानुपरमात् । अक्रमप्रवृत्तास्तु नशास्त्राधिकारिणइति स्वीकुर्म । अन्यथेदानीमेव - अकृतव्रतस्य अनधिगतागमस्य लिखितपठितस्वाध्यायस्यैव मीमांसा धिकारप्रसगात् सौगतादीनामप्य स्वमतदूषणार्थिना ब्रह्मविचाराधि कारप्रसगाच्च । अतो हेत्वन्तरा नित्यानित्यवस्तुविवेकोय माशामो दकायते। तेनान्यस्मात्तदसिद्धौ न तद्वतो ब्रह्मविचार , तेनैव तद्व त्तेतितु मिथस्सश्रय पुनरम्मजाति । एतदभिप्रायेण भाष्यम् "नित्यानि त्यवस्तुविवेकादयश्च मीमासामनन्तरेण न सम्भवन्ति " इत्या दि । एतेनैव द्वितीयोपि कल्पो दूषितइति भाष्यकाराभिप्राय । तथाहि यदि नित्यानित्यौ पदार्थौ श्रवणेन निश्चित्य तद्वते हेयो पादेयत्वे निश्चियेते तदा पूर्वोक्तमेवोत्तरम् , चक्रकापत्ते । अथ नित्यमस्तिचेत्तदुपादेय अनित्यचेदनुपादेयमित्येव मात्रविवेक , तद पि मन्दम्, अपुरुषार्थत्वे नित्यस्याप्यनुपादेयत्वात्, अनित्यस्यापि-

---

ब्रह्मविचारप्रवृत्तिप्रतिबन्धे ख्यात्यार्थं सांख्यादिशास्त्रे प्रवृत्तिर्युज्यत एवेत्यगमात् ( अक्रमप्रवृत्तास्त्विति ) अध्ययनविधिप्रयुक्त क्रमातिक्रमे- ण प्रवृत्तानित्यर्थ । ( मीमांसाधिकारप्रसङ्गादिति ) अतश्च "अथातोधर्म जिज्ञासे" त्यत्र वेदाध्ययनानन्तर्यं मथशब्दार्थो न स्यादिति भावः । एव "अथातश्शेषलक्षण" मित्यादावपि पूर्वपूर्वाध्यायार्थवृत्तता अथ शब्दा- र्थो न स्यात् । ( सौगतेति ) तथाच साधनचतुष्टयस्यापि पूर्ववृत्तत्व तव नसभवतीति भाव । हेयोपादेयत्वविवेकइति द्वितीयकल्प दूषय ति ( एतेनेति ) ( पूर्वोक्तमिति ) अन्योन्याश्रयइत्यर्थ. । चक्रक मपिहि तद्गर्भमेव, श्रवणेन नित्यानित्यनिश्चय तेन हेयोपादेयताज्ञान मतेनश्र वणमिति चक्रकमित्यर्थ । ( अपुरुषार्थत्वइति ) पुरुषार्थशब्दस्सुखादि पर., उपादेयत्वशब्दइच्छाविषयत्वपर , विवेकिना मनित्यमनुपादेय

न्त्वेन लभ्यते। नच—तद्दर्शनं श्रवणफलमिति दर्शनसाधनभूतश्रवणाङ्गत्वं शमादीनामिति वक्तुं युक्तं, श्रुतहानाश्रुतकल्पनादि दोषप्रसङ्गात्। अविधेयज्ञानत्वात् शब्दजन्यप्रत्यक्षयोश्च निरस्तत्वात्। एवञ्च शमादीनां ब्रह्मविद्याङ्गतयोपादेयत्वं साधनलक्षणे शमदमाधिकरणेऽवगन्तव्यम्। अतएते शमादयः कथं शारीरकश्रवणापूर्वमुपात्तास्तु। अत्रायं संग्रहः — शान्त्यादयो विनियोज्यन्ते विद्याकामेन मुमुक्षुणा। शास्त्रारम्भे कथं तेषामुपयोगस्त्वयोच्यते॥ *॥ इदञ्चोक्तं भाष्ये—“नित्यानित्यवस्तुविवेकादयश्च” इत्यादिशब्देन सङ्गृह्यते। तथ शमादीनां साधनत्वावगतेः कर्ममीमांसापेक्षतया कर्मविचारपूर्ववृत्तत्वस्य दुस्त्यजत्वमप्युक्तम्—“एषां साधनत्वं विनियोगाधीनम्, विनियोगश्च श्रुतिलिङ्गादिभ्यः स च तार्तीय” इति। यद्यपि शारीरकमीमांसायामेव अपेक्षिता श्रुतिलिङ्गादयोऽपि व्युत्पादयितुं शक्यन्ते, तथापि सङ्गतिविशेषात् सामान्यतस्तृतीयाध्याय एव तद्व्युत्पादनं प्राप्तमिति सिद्धोपयोगमात्रमत्र कर्तव्यं, नपुनस्तद्व्युत्पादने प्रयतितव्यम्। इदञ्च तार्तीयश्रुत्यादिसापेक्षत्वाभिधानं प्रदर्शनार्थं, कथं वेदप्रामाण्यव्युत्पादनमन्तरेण तदधीनभूतब्रह्मविचारोऽपि स्यात्, तत्प्रामाण्यञ्च प्रथमाध्यायसाध्यं, कथञ्च सामान्यतश्शास्त्राणां शास्त्रार्थानां वा द्वैतीयभेदाभावे त्वनुष्ठानतादर्थ्यं प्रामाण्यं प्रतिष्ठितं भवेत्,

---

त्यर्थ इत्यत आह (नचेति) (श्रुतेति) “शान्तः पश्ये”दिति स्वरसतः श्रुतस्य साक्षात्साधनत्वस्य त्यागः अश्रुतस्य श्रवणसाधनत्वस्य कल्पनञ्चेत्यर्थः। ननु—दर्शनस्याविधेयत्वेन तदङ्गत्वासम्भवात् मनननिदिध्यासनयोश्चाङ्गत्वेन मुख्याङ्गत्वे सम्भवति तदङ्गावकल्पनायोगात् श्रवणप्रत्यङ्गत्वमित्यत आह (अविधेयेति) किञ्च—श्रवणाङ्गत्वेऽपि फलोपकार्यङ्गतया शमादेः प्रवृत्तत्वमित्यपि द्रष्टव्यम्। त्वन्मते दर्शनसाधनतया श्रवणविधानञ्च न सम्भवतीत्याह (शब्दजन्येति) श्रवणप्रवृत्त्यनन्तरमेव विचारेण ब्रह्मविद्याङ्गत्वमवधायानन्तरमेव ब्रह्मविद्याथ

कतरां विचारयेषु शास्त्रार्थविशेषेषु भेदाभेदचिन्तनकारा, तेनशब्दान्तरादयोऽद्वैतीया विशेषतश्चिन्त्या । तार्तीयोपयोगस्तु दर्शितस्तन्त्रान्तरे भाष्ये, श्रुतिलिङ्गादेस्सर्वत्रापेक्षणात् । उद्गीथविचारे क्रत्वर्थत्वपुरुषार्थत्वादिविमर्शस्तु तुर्यप्रयुक्तिसापेक्षः, पौटाविभक्तपाञ्चमिकक्रमप्रमाणापेक्षिणी चार्चिरादिगतिवाहिकगणपौर्वापर्यव्यवस्था, कर्तृलक्षणन्यायोपजीविनी च ब्रह्मविद्याधिकारवर्णाश्रमादिधर्मविशेषव्यवस्थापना । एवं 'तेषामेकैकएव तावत् न्यायानसोऽपूर्व' इत्यादिष्वप्यतिदेशादिसापेक्षत्वमनुसन्धेयम् । सूत्रकारोऽपि "तदुक्त"मित्यादिना कर्ममीमांसायां सामान्यन्यायान् प्रथमसिद्धानुदाहरतीति भवद्भिरपि व्याख्यातमेव । नचायं शारीरकैकवक्तव्यमेवतत्प्रकृत्या परोपजीवनेन दर्शयतीति वाच्यम्, तत्र तत्रैवतत्सङ्गते स्थापितत्वात् । नच-प्रसिद्धैर्न्यायैः स्वयमेववेदप्रामाण्यादिकं विचारयाम किं जैमिनीयेनेति वाच्यम् । तथापि कर्मविचारपूर्वकत्वस्यदुष्प्रतिक्षेपत्वात्, तत्रविचारसागरे परिभ्रममाणानां यदि जैमिनिर्न कर्णधारायित, सएषक्षम्यतामपराधः । एवञ्च लोकोत्तरप्रज्ञेन भवता बादरायणीयमपि नादरणीयमविशेषात् । नचायं क्रमनियमोऽद्यतनभावादापतन् जैमिनीयो बादरायणीयो वा, येन तत्राभ्यसूयिष्यसि । अतः कार्त्स्न्येन कर्ममीमांसासापेक्षत्वप्रदर्शनार्थमेव शमादिसाधनत्वावगतेः स्मार्तीयापेक्षाभाषणम् । यद्यपीहामुत्रफलभोगविरागसमुन्नते

---

तया तदनुष्ठानाद्ब्रवस्य श्रवणात्पूर्वत्व युक्तमित्याह (एषामिति) विधास्यन्ते - ब्रह्मविद्याङ्गत्वेन कर्तव्यतया निरूपयिष्यन्ते । (तत्रैवेति) मुख्यक्रमाद्यनुसारेण कर्मविचारपूर्वत्वे सिद्धे तत्रापेक्षिततया न्यायाना तत्रैव सङ्गतत्वादित्यर्थः । ततश्च एतदधिकारिणा तेषा न्यायाना ज्ञातत्वादेवेहानिरूपण, नतु तन्द्रालुत्वादिति भाव । (दुष्प्रतिक्षेपत्वादिति) मुख्यक्रमानुरोधन्यायादिति भाव । इष्टापत्ति माशङ्क्य तत्रानादरेऽपि मुख्यक्रमादिसिद्धे क्रमे नाभ्यसूया कार्येत्याह (नचायमिति) नन्वेवसति मुख्यक्रमादेरेव पूर्ववृत्तत्वसाधकत्व नतु न्याय-

पूर्ववृत्तत्वेनभाविते—( यद्यपि इहामुत्रफलभोगविरागो मुमुक्षुत्वं चे त्युभय नियतपूर्वमसाधारण सप्रयोजनाभिधान चेत्यभ्युपगच्छाम, तथोक्त भाष्ये – ) " अधिगतात्पास्थिरफलकेवलकर्मज्ञानतया सञ्जातमोक्षाभिलाषस्य अनन्तस्थिरफलब्रह्मजिज्ञासाह्यनन्तरभाविनी" ति, तथापि पुरुषप्रवृत्तिक्रमविशेषसूचनपरत्वात्, कर्मविचारपूर्ववृत्तत्वो क्तौवतयोरप्यर्थलब्धत्वात्, अनन्तास्थिरफलतया प्रथममापात प्रती तकर्माख्य प्रतिबन्धकनिवृत्तिसूचनेन निर्विघातब्रह्मविचारारम्भद्योतनात्, यज्ञादिवाक्यार्थापेक्षित पदार्थनिश्चयवत्त्वव्यजनायथावस्थितब्रह्मतदुपासना दि तत्त्वावगमहेतुभूत न्यायकलापशीलनोद्भेदात् अपवर्गोपायभूतोपासनापे क्षिता नभिसहित फलसहकारिवर्गस्वरूपनिश्चयाद्योपजीवनाभिप्रायाच्च कर्मविचारस्यैव पूर्ववृत्तत्वोक्ति प्रयोजनवत्तामेतीति तामेवाद्रियामहे। अभ्यर्हित पूर्ववृत्ततया वक्तव्यमितिचेत्तर्हि मुमुक्षुत्वमेकमेव त्वयापि वक्त व्यम्। तदर्थतया पूर्वेषामुक्तिरितिचेत्तुल्यम्। प्रयोजनाधिक्य मिथ स्सम्र याद्यभावश्च विशेष । एतेन तापत्रयाभिहतिपूर्ववृत्तत्ववादिनोपि - प्रत्युक्ता, तापत्रयाभिहतिमात्रस्य मन्त्रौषधिनीतिशास्त्रादि प्रवृत्ति साधारण्यात्। दृष्टानु श्रविकविषयवितृष्णा पर्यन्तायास्तु तस्या क र्मविचारसापेक्षत्वस्थापनात्। तथोक्त साङ्ख्यैरपि " दु खत्रयाभिघा ता जिज्ञासातदुपघातकेहेतौ। दृष्टेसापार्थाचे नैकान्तात्यन्ततोभावा त्॥ दृष्टवदानुश्रविकस्सह्यविशुद्ध क्षयातिशययुक्त " इति। एव कर्मपरीक्षोपबृंहितैव सा भाष्येप्युक्ता " तापत्रयातुरै रमृतत्वाय स एव जिज्ञास्य " इति। श्रुतिश्च " परीक्ष्यलोकान् कर्मचितान् ब्रा ह्मणो निर्वेदमायात " इत्यादिका। अत " अथातोब्रह्मजिज्ञासे " त्यत्र न साधनचतुष्टयाद्यानन्तर्यं सूत्रकृदभिप्रेत, अपितु कर्मवि चारानन्तर्यमेव। तथाच वृत्तिकार " वृत्तात्कर्माधिगमादनन्तर ब्र ह्मविविदिषे " ति। अयञ्च पक्षो भास्करैरप्यङ्गीकृत। निरीश्वरमी मांसकैरपि " कृत्वाव्येतुर्निर्दोषं वेदार्थविज्ञानाय मीमांसारम्भ " इति

यदार्यैः कर्मोपक्रमं शास्त्रमर्थतो ब्रह्मविचारादिरस्त्वेकमित्यभ्युपगन्तव्यमे व । नच द्वादशाध्यायमात्रे शास्त्रं पर्यवसितं; शबरस्वामिप्रभृति- भिः संकर्षकाण्डांशस्य सूत्रोपादानात्, शास्त्रान्तरत्वादुपनिषद्भागवि न्येति पक्षस्यच त्वदार्यैः कैश्चिदपरिग्रहादिति ।

इति श्री कवितार्किकसिंहस्य सर्वतंत्रस्वतन्त्रस्य श्रीमद्वेंकटना-
थस्य वेदांताचार्यस्य कृतिषु
शतदूषण्यां साधनचतुष्टय पूर्ववृत्तत्व भंगोऽष्टमः ॥

---

सापेक्षताया इतिचेत , सत्यम , शास्त्रापेक्षितानां न्यायानां कर्मविचार सिद्धतया कर्मविचारस्य अथातश्शब्दपरामर्श योग्यताप्रतिपादनपर- त्वाद्भाष्यस्य ।

इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्य पादसेवासमधि
गत परावरतत्वयाथात्म्येन तदेकदैवतेन तच्चरणपारि
चरणपरायणेन तत्प्रसादलब्ध महाचार्यापरनाम
धेयेन रामानुजदासेन विरचितायां शत
दूषणीव्याख्यायां चण्डमारुताख्यायां
साधनचतुष्टय पूर्ववृत्तत्वोक्ति
भंगोनाम
॥ अष्टमस्कन्धः ॥

श्री।

श्रीमते रामानुजायनमः।

श्रीमते निगमान्तमहादेशिकायनमः ।

## अथ नवमोवादः ॥

हयग्रीवसुधासिन्धु हर्षहेषाखोर्मयः ।
जयन्ति वादवेलान्तक्षिप्त बाह्यकुदृष्टयः ॥

---

( हयग्रीवेति ) चन्द्रदर्शनजन्यहर्षेण समुद्रोर्मिप्रकर्षस्य दर्शना दत्राप्युत्कर्षसिद्धये हर्षाधीनत्वमाह ( हर्षेति ) तेन दूरक्षेपो व्यज्यते, ऊर्मयोहि वेलान्ते क्षिपन्ति - हेषास्तु वेलान्तादपि क्षिपन्ति, हेषाण्यनुक्त्या सुधापदेनानन्दस्य विवक्षितत्वाच्च स्वाभाविकानवधिकातिशयानन्द लाभेन चन्द्रदर्शनजन्यहर्षादतिशयो हि गम्यते, तेन प्रसिद्धोर्मिभ्योतिशयसिद्धिः । वादवेलान्तादित्यर्थः । पंचमीति योगविभागेन तत्पुरुषसमासः । वादस्य वेलात्वेन रूपणात् भाष्यकारादीनां हयग्रीवात्मक सुधासिन्धुतया तदुपदेशसूक्तेर्हेषात्वेनच रूपणं विवक्षितमिति गम्यते । उपदेशस्य वादवेलान्तात् क्षेपकत्वोक्त्या-हेषात्वरूपणेनच, 'एतच्च विस्तरेणे' त्यतः प्राचीनग्रन्थस्योपदेशरूपत्वमुत्तरग्रन्थस्थशंकानां परिहारगर्भत्वं, तस्य अस्पष्टत्वंच व्यज्यते, तेन-वादान्तरे ष्विव सिद्धान्ताकथनात् ग्रन्थो न पूर्णइति न भ्रमितव्यम् । सिद्धान्ताकथनेन कथानधिकारे कथानधिकारत्वस्या कथंप्रवर्तेतेति शंका परिहारमभिप्रैति । याथात्म्यसिद्धिरित्यनेन निश्शेषमेव शंका परिहृता । अयं भावः ; ॥ ॐ ॥ याथात्म्यंहि प्रमाणानां साधकत्वे प्रयोजकं । तदसत्वं परन्यायाततो मानमसाधकम् ॥ प्रातिभासिकमानेन व्यावहारिकसाधनं । व्यावहारिकमानेन तत्वंसिद्ध्येन्नचान्यथा ॥ प्रातिभासिकमानेच क्वचित्सिद्धिरसत्तेनच । किन्तुमानान्तरादेव संवादाद्गैवसाधकम् ॥ स्वाप्नार्थमोक्षज्ञान मनुमापकमुच्यते । तेन परया नयास्थानां हेतूनां

विस्तरेण कुदृष्टिमतमनुभाष्य "तदिद"मित्यादिना "न्यायानुगृहीतत्रय्यन्तप्रत्यक्षादिसकलप्रमाणवृत्तयाथात्म्यविद्भिरनादरणीय"मित्यन्तेन शिष्यान् प्रत्युपदिशतो भाष्यकारस्यायं भावः, सौगतानामिव प्रच्छन्नसौगतानामपि कथायामनधिकार इति । वेदार्थसंग्रहे च स्पष्टमाह— "सर्वशून्यवादिनो ब्रह्मव्यतिरिक्तसर्वशून्यत्ववादिनश्च स्वपक्षस्थापकप्रमाणपारमार्थ्यानभ्युपगमादभियुक्तैर्वादानधिकार एव प्रतिपादितः, "अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः ।" इति । अयमाशयः —॥ * ॥ यदि प्रपञ्चमिथ्यात्ववादी वादाधिकारिता । भवेन्माध्यमिकस्यापि भवेद्वादाधिकारिता ॥ तथा च ब्रह्मतत्त्वं ते निर्गुणं निष्प्रमाणकम् । कथं मध्यमबौद्धस्य निर्वादे

---

चप्रमाणता ॥ असाधकाभिमानस्य योग्येस्वमतनीतितः । साधकं यत्र गैव कथासनमनुत्तमम् ॥ प्रमाणभूतैरारूढ प्रापित्संन्तिदुरन्धना । निष्कासनीयास्ते सर्वे वादिगोष्ठीसमीपतः ॥ ॥ इति । 'विस्तरेणानुभाष्य- शिष्यान् प्रत्युपदिशत' इत्यनेन सर्वत्र शिष्यान् प्रत्येवोपदेशाः क्रियन्ते, मायिककुतर्केन्द्रजालैस्सात्त्विकान् कुदृष्टयो वशमानयेयुरित्यधिकारमारोप्य तैस्सह विवादाभिनये कृते शिष्याणां हृद्यता भवतीति तदभिनयः क्रियत इति सूच्यते । "परमपुरुषवरणीयताहेतुगुणविशेषविरहिणामनादिपापवासनादूषिताशेषशेमुषीकाणा'मित्यादिना सौगतसाधारणधर्मोक्त्याऽस्याधिकारे तद्वदेतेष्वप्यधिकारो भवेदिति प्रतिबन्दिरभिप्रेतेत्याह (अयं भाव इति) सर्वशून्यवादिन इत्यारभ्य शून्यवादिन इत्यन्तो वेदार्थसंग्रहग्रन्थः । अभियुक्ताः पूर्वतनवादाचार्याः । (अनुपायत्वादिति) प्रमाणतर्काणां तन्मते शून्यत्वात् तन्मतेनोपायानधिकार इत्यर्थः । शून्यवादिविषयस्य कथं प्रकृतसङ्गतिरित्याशङ्क्याह (अयमाशय इति) प्रतिबन्दिरूपस्थापकत्वान्नासङ्गतिरिति भावः । मध्यमो माध्यमिकः । यदि कथानधिकारी शिष्यापसरणीय इति मन्यसे तथापि तादृशात् त्वया कथं तन्निरासनमिति भावः । नापवक्ष्यत इत्ययमा

श्रीः ।

श्रीमते रामानुजायनमः ।

श्रीमते निगमान्तमहादेशिकायनमः ।

## अथ नवमोवादः ॥

हयग्रीवसुधासिन्धु हर्षहेषाख्योर्मयः ।
जयन्ति वादवेलान्तक्षिप्त वाह्यकुदृष्टयः ॥

---

( हयग्रीवेति ) चन्द्रदर्शनजन्यहर्षेण समुद्रोर्मिप्रकटत्व दर्शना दत्राप्युत्कटत्वसिद्धये हर्षाधीनत्वमाह ( हर्षेति ) तेन दूरक्षेपो व्यज्यते, ऊर्मयोहि वेलान्ते क्षिपन्ति - हेषास्तु वेलान्तादपि क्षिपन्ति, उपाध्यनुक्त्या सुधापदेनानन्दस्य विवक्षितत्वाच्च स्वाभाविकानवधिकातिशयानन्द लाभेन चन्द्रदर्शनजन्यहर्षादतिशयो हि गम्यते, तेन प्रसिद्धोर्मिभ्योतिशयसिद्धिः । वादवेलान्तादित्यर्थः । पंचमीति योगविभागेन तपरइतिवत्समास. । वादस्य वेलात्वेन रूपणात् भाष्यकारादीनां हयग्रीवात्मक सुधासिन्धुतया तदुपदेशसूक्तेर्हेषात्वेनच रूपणं विवक्षितमिति गम्यते । उपदेशस्य वादवेलान्तात् क्षेपकत्वोक्त्या-हेषात्वरूपणेनच, 'एतच्च विस्तरेणे' त्यतः प्राचीनग्रन्थस्योपदेशरूपत्वमु-त्तरग्रन्थस्थशंकानां परिहारगर्भत्वं, तस्य अस्पष्टत्वंच व्यज्यते, तेन-वादान्तरे ष्विव सिद्धान्ताकथनात् ग्रन्थो न पूर्णइति न भ्रमितव्यम् । सिद्धान्ताकथनेन कथानधिकारे कथानधिकारकथा कथंप्रवर्तेतेति शंका परिहारमभिप्रैति । याथात्म्यविद्भिरित्यनेन निश्शेषमेव शंका परिहृता । अयं भावः ; ॥ ※ ॥ याथात्म्यंहि प्रमाणानां साधकत्वे प्रयोजकं । तत्त्वं परन्यायाततो मानमसाधकम् ॥ प्रातिभासिकमानेन व्यावहारिकसाधने । व्यावहारिकमानेन तत्त्वंसिद्धेन्नचान्यथा ॥ प्रातिभासिकमानेच कचित्सिद्धिरततोनच । किन्तुमानान्तरादेव संवादाद्येववाधकम ॥ व्याप्त्यागंगोचरज्ञान मनुमापरमुच्यते । तेन नरमानरान्यानां हेतुनां

विस्तरेण मुदाहृतमतमनुभाष्य "तदिदं मित्यादिना "याथातु गृहीतवाक्य प्रत्यक्षादिसकलप्रमाणवृत्त याथात्म्यनिह्नवनादरणाय" मित्यनेन शिष्यान् प्रत्युपदिशतो भाष्यकारस्याय भाव, सौगतानामिव प्रच्छन्नसौगतानामपि कथायामनधिकार इति । वेदार्थसंग्रहेच स्पष्टमाह— "सर्वशून्यवादिनो ब्रह्म व्यतिरिक्तसर्ववस्तुमिथ्यावादिनश्च स्वपक्षस्थापकप्रमाण पारमार्थ्यानभ्युपगमादभियुक्तैर्वादानधिकारएव प्रतिपादित, "अधिकारोनुपायत्वान्न वादे शून्यवादिन ।" इति । अयमाशय ॥ * ॥ यदिप्रपञ्च मिथ्यात्ववादी वादाधिकारिता । भवेन्मायमिकस्यापि भवेद्वादाधिकारिता ॥ तथाच ब्रह्मतत्त्वते निर्गुण निष्प्रमाणक । कथ मध्यम बौद्धस्य विवाद

---

चप्रमाणता ॥ असाधकाभिमानस्य योग्येस्वमतनीतित । शान्त एव भ्रमेणैव कथासनमनुत्तमम् ॥ प्रमाणभूषैरारूढ प्राविश्सन्तिदुर घना । निष्कासनीयास्तेसव वादगोष्ठीसमीपत ॥ ॥ इति । विस्तरेणानुभाष्य शिष्यान् प्रत्युपदिशत' इत्यनेन सर्वत्र शिष्यान् प्रत्येवोपदेश क्रियते, मायिकुतर्कैन्द्रजालैस्सात्विकान् कुदृष्टयो वशमानयन्तीत्यधिकारमारोप्यतैस्सहविवादाभिनयेकृते शिष्याणा हृष्टताभवतीति तदभिनय क्रियतइति सूच्यते । ' परमपुरुषवरणीयताहेतुगुणविशेष विरहिणामनादि पापवासनादूषिताशेष शेमुषीकाणा ' मित्यादिना सौगतसाधारण धमात्तयाऽस्याधिकारे तद्गुरोरप्यधिकारो भवेदिति प्रतिबन्दिरभिप्रेतेत्याह (अयभावइति) सर्वशून्यवादिनइत्यारभ्य शून्यवादिनइत्यन्तो वेदार्थसंग्रहग्रन्थ । अभियुक्तैः पूर्वतन्त्र व्याख्यातृभिर । (अनुपायत्वादिति) प्रमाणतर्काणा तन्मते शून्यत्वात् त मतेनैवानधिकारइत्यर्थ । शून्यवादिविषयस्य कथ प्रकृतसङ्गति रित्याशङ्क्याह (अयमाशयइति) प्रतिबन्दुदाहरणत्वात्सङ्गतिरिति भाव । मध्यमो माध्यमिक । सहि यथानधिकारी निष्कासनीय इति मन्यसे तवापि तादृशत्वात् त्वया कथ नानिष्कासनमिति भाव । नापरत्यतइत्ययमा

अस्तिच सत्ताभ्युपगमेऽप्यसिद्धिरिन्द्रादेराभासत्व । ननु प्र
माणादिसत्ताभ्युपगमाभावे व्यवहारार्थैर्धर्मिणोऽसिद्धौ तस्य कथ
माभासत्वसाधनं, कथवा सद्वचनाभासलक्षणयोगित्यादि प्रयोजका
वधारणामुखेन दूषणदूष्यादि व्यवस्थापनं; सर्वेषां स्थापनबाध
नानां प्रमाणाधीनत्वात् ; मैवं सत्ताभ्युपगममात्रेण प्रसिद्धिसिद्धैः प्र
माणादिभिरस्माकं व्यवहारोपपत्तेः । उक्तञ्चेष्टसिद्धिकारैः – ' सैव,
प्रसिद्धिरस्ति, अतएव व्यवहरामः, किन्तु ना स्वामूलपश्यामः "
इति । यथाप्रमाणादीनि सद्रूपाणि स्वीकुर्वता भवता प्रमाण सा
धकं नतदाभासइत्यादि व्यवह्रियते तथा व्यवहारिभिरेव सर्वै प्र
माणादिसत्वासत्वचिन्तायामुदासीनै कथाप्रवर्त्यतामिति ह्यादिशा
म । यदिचैवं नानुमन्यसे तिष्ठामस्तव्यास्माभिरारोपिते सत्तानभ्युप
गमपक्षे । तथापि भाप्रति त्वदुक्तमाश्रया सिद्ध्यादिदूषणं दुर्वच,
दूषणहीदं कथाया प्रवृत्तस्यैव वाच्यम् न पुनराहरतो विहरतो
वा । साच कथा कयापि मर्यादया प्रवर्तनीया, तत्र वादिप्रति
वादिभ्यां सत्ताभ्युपगमे तात्त्वपर्यनुयोगानवकाशः । उभाभ्यामसत्या

पयेति - अतद्वदूषणत दूष्यमिदं नेति व्यवस्थाभ्यात् , स्थापनानां
बाधनानांच प्रमाणाधीनासिद्धित्वात् , प्रमाणस्यैवासत्वे कथं लक्षणयो
गादिनिर्धारणमिति शङ्कते ( प्रमाणादीति ) ( सत्ताभ्युपगममात्रेण प्र-
सिद्धिसिद्धैरिति ) व्यावहारिकैरित्यर्थः । व्यवहारे प्रमाणादीनां सत्व
मप्रयोजकमित्यभिप्रायेणेष्टसिद्धिग्रन्थं विवृणोति । ( यथेति ) किंवा
विप्रतिवादिभ्यां उभाभ्यां सत्वाभ्युपगमेन प्रवर्तितायां कथायामिदं-
दूषणमुच्यते ? उतो भाभ्यामसत्वाभ्युपगमेन प्रवर्तितायां ? यद्वा -
एकेन सत्वमितरेण चासत्वमुपगम्यप्रवर्तितायां ? अथवोभाभ्यामपि
प्रमाणादि सत्ताभ्युपगमौ दासीन्येन व्यवहार नियमे - स प्र-
य वध्या प्रवर्तितायामिति मर्यादाविभाग मभिप्रेत्य क्वापि मर्या-
दाया नास्मान् प्रति दूषणो द्भावन सभव इत्याह । ( त-
त्र वादिप्रतिवादिभ्यामित्यादिना ) प्रतिबन्दिमुक्त्वापरिहारान्तरमा

विनियमादिति सत्ताभ्युपगमगर्भेतिवाक्यम्, तत्रानन्तराणवाग्व्यवहारा विकोभयसम्भावितव्यवहारानियमसमयबन्धमात्रेणसमीहितसिद्धे । नच समयबन्धेपि सत्ताभ्युपगमगर्भ, प्रमाणतर्काभ्यां व्यवहर्तव्य परस्पर प्रतिज्ञाहान्याद्यन्यतमनिग्रहस्थान प्रदर्शनीय, तदुपपादने तदुत्तीभयो र्व्यवहर्तव्य, अन्यथातदुपपादनासमर्थस्य, अ(न्य)थाप्रत्तु जेतेतिव्यवह र्तव्य, प्रामाणिकतयाप्रतीत पक्षस्तथामितिव्यवहर्तव्य इत्येवमादिरा रूपेनियमबन्धेपिसत्ताभ्युपगम प्रसङ्गाभावात् । नच समयबन्धेऽपिहेतुर्वाच्य, सच कथाप्रवृत्तिमन्तरेण नवक्तु शक्यइति, सत्ताभ्युपगमहेतु नाभिधान विषय प्रत्यवस्थानप्रतिबन्धवतार, तत्त्वनिर्णयविजयमूलत्वेन लोकादि द्धस्याविचारित रमणीयस्य व्यवहारनियमस्य हेतुमन्तरेण वादिभ्या द्वा भ्यामपि स्वेच्छयैवग्रहणात । नचैव प्रमाणमूलत्वाभावेन विचार तद्विष य तत्फलविप्रलम्भप्रसङ्ग, अनादिपारम्पर्यागतस्य लोकव्युत्पत्तिसवादिनस्त स्य असम्भवदन्यथाभावाभावरूपस्वतश्शुद्धिसिद्धत्वात । नच प्रमाणादिस चापिस्वेच्छयैवाङ्गीकार्या, व्यवहारनियममात्रेणैवान्वयव्यतिरेकवत्तानिरपेक्षे

---

यसमयेनिबध्यन्ते नतु सत्त्वमिति कुतइतिन शङ्कासंभवइत्याह ( न चेति ) यद्येवशब्दे ततदा दोषमाह ( सचेति ) सहेतुश्चसत्त्वमि त्यर्थं । समयबन्धे प्रमाणाद्यन्वयं सत्तानन्वयेच कोहेतु किमयम यवेति संशयस्य अन्यतरनिर्धारणायावाभ्यां कथाप्रवर्तनीया, तथाचात्रै वकथायामधिकारोदुरुपपद्यइति कथान्तरेकथमनधिकार, ततश्चसत्ता भ्युपगमस्य कथाहेतुत्वसमर्थनविषयकथाया प्रतिवादिन. प्रत्यवस्थान यथाङ्गीक्रियते तथान्यत्रापीति याप्रतिबन्दी तादृश्येवेदापि प्रतिबन्दीत्या दित्यर्थं । उपसंहरति ( तत्त्वनिर्णयेति ) ग्रहणादित्यनन्तर नसम यबन्धहेतुर्वाच्यइत्यध्याहार । तस्य-व्यवहारानियमस्य ( असम्भवेति । असम्भवदन्यथाभावाभावरूप स्वतश्शुद्ध्यासह सिद्धत्वादित्यर्थं । स्वे च्छयैवपूर्वनियमाङ्गीकार।स्वयमपि स्वेच्छयासत्ताभ्युपगमस्य हेतुत्वमङ्गी कुर्मइत्यत्राह ( नचेति ) ( व्यवहारनियममात्रेणेति ) अनादिव्यव

